पाशों को चलाया। नागपाशों के प्रभाव से आकाशचारी पक्षीगण इधर उधर भाग गये। बाद में भगवान् शङ्कर ने गारुडास्त्र से उन नागपाशों को दूर करने के लिये आकाशमण्डल को ही गरुडमय बना दिया। गरुड के परों के कम्पन से उत्थित पवन अत्यन्त वेग से बहता हुआ वनवृक्षों को ही जड़ से उखाड़ कर आकाश में ले आया। सर्प समूह भी सहसा शान्त हो गया। अर्जुन ने अपने नागास्त्रों को वैरी के प्रभाव से विफल समझकर क्रुद्ध होते हुए आग्नेयास्त्र को चलाया उससे चारों तरफ आग की लपटों से ज्वाला धधकने लगीं। इस तरह अखिललोकको ग्रसने के लिये उद्यत होते हुए प्रलयकालिक महाप्रचण्ड ज्वलज्ज्वालावाली आग को देखकर भगवान् शङ्कर ने उसको शान्त करने के लिये वारुणास्त्र का प्रयोग किया। उससे तुरत ही आकाश में बादलों की घटा छा गयी। उससे मुसलाधार वर्षा होने लगी। बाद में आगों की लपटें आपसे आप शान्त हो गयीं। आग के शान्त होने से आकाशभाग हरा भरासा दीखने लगा। इस तरह वैरिवधार्थ अर्जुन ने जिन २ अस्त्रों का उपयोग किया, उन २ अस्त्रों को महादेव जी ने व्यर्थ ही कर दिया। अन्त में अर्जुन ने अपने सारे अस्त्रों के विफल हो जाने पर महादेवजी के साथ बाहु युद्ध ही करने की इच्छा की।

## सप्तदश सर्ग।

### हरसेना के साथ अर्जुन के युद्ध का वर्णन।

बाद में अर्जुन सारे दिव्यास्त्रों के खतम हो जाने से शिवजी के साथ संग्राम से कुछ भयभीत होकर भी पुनः धैर्यधारण द्वारा अपने स्वाभाविक पराक्रम को प्राप्त कर विपक्ष पक्ष को जीतने के लिये सन्नद्ध हो गये। उस समय क्रोध के मारे आंखें लाल २ हो गयीं। मुख पर पसीने छा गये। भौंहें तन गईं। धनुष को तानकर बाणों के वर्षण से शम्भु सेना को पीड़ित कर धनञ्जय चमकने लगे। किन्तु महादेव के प्रति उनके सारे बाणों के प्रयोग विफल होते गये। फिर भी शङ्कर भगवान् अर्जुन के पराक्रम को देखकर क्षुब्ध हो गये और अर्जुन को सराहने लगे—अहो ! शत्रु से निगृहीत होकर भी परम उत्साह के साथ फिर से धनुष पर प्रत्यञ्चा चढाकर बाण छोड़ने के लिये उद्यत होता हुआ अत्यन्त बहादुरी के साथ कीर्ति को प्राप्त करने के लिये पराक्रम दिखलाता हुआ यह लड़ने के वास्ते तैयार हो रहा है। बाद में अनेक तर्क वितर्क करके स्वयं भी युद्धार्थ उद्यत हो गये। दोनों में फिर से घोर संग्राम होने लगा। अर्जुन के बाणों से आहत होकर शम्भु की सारी सेना भाग गई। बाद में शङ्कर जी अपनी सेना की दुर्दशा देखने से क्षुब्ध होकर साक्षात् यमराज की भांति भयङ्कर रूपधारण कर धनुष का टङ्कार करने लगे। अर्जुन से प्रक्षिप्त सारे बाणों को शिवजी ने बीच में ही विध्वस्त कर डाला। इसको देखकर अर्जुन बहुत घबड़ा गये। फिर से होश में आकर अर्जुन हर सेनापर बाण वृष्टि करने लगे। तदनन्तर भगवान् शङ्कर ने अपने स्वरूप को प्रकट कर अर्जुन के सारे बाणों को एक साथ ही नष्ट कर दिया। अर्जुन अपने सारे बाणों के नष्ट हो जाने से बहुत चिन्तित हो गये। इसी मध्य में शिवजी ने मर्मघाती बाणों से अर्जुन को अधिक व्यथित किया। बाद में प्रभु की माया से शरीर से कवच को भी

छोड़कर अत्यन्त देदीप्यमान होने लगे। उसी समय उनके शरीर [illegible] तरकस अचानक निकल पड़े। पर तुरत ही फिर से अर्जुन रुधिर से लथ-पथ शरीर होकर भी बहादुरी के साथ शिवजी को पीड़ित करने लगे। महादेवजी से फिर छिन्न भिन्न तलवार होकर अर्जुन बिल्कुल खाली हो गये। और पराजय पाकर भी वे पुनः शिलावृष्टि करने लगे। शिव द्वारा उसका भी निवारण कर देने पर अन्त में अर्जुन शिवजी के साथ बाहुयुद्ध करने के लिये ही तैयार हो गये।

## अष्टादश सर्ग।

### शिव और अर्जुन का बाहु युद्ध वर्णन।

बाहु युद्ध करने के लिये रणभूमि में आये हुए अर्जुन को देखकर बार बार प्यार कर भगवान् शङ्कर ने मुष्टि उठाकर मारा। उस समय दोनों के बाहुयुद्ध से उत्पन्न ध्वनि पर्वतों की कन्दराओं को भी प्रतिध्वनित कर रही थी। दोनों के शरीर रुधिर से लथपथ हो गये। जिससे दोनों को पहचानने में भी प्रमथ गण को धोखा होने लगा। हिमाचल कांपने लगा। पृथ्वी डगमगाने लगी। गिरि गङ्गा समुद्र तरङ्ग से चलायमान होकर रसातल को भी डुबाने लगी। बाहुयुद्ध करते २ अर्जुन ने आकाश में उठे हुए शिवजी के चरणों को पकड़ लिया। चरण ग्रहण करते ही भगवान् आशुतोष शङ्करजी ने ताड़ना सुन्दर कार्य के अनुष्ठान से प्रसन्न होकर अर्जुन को गले से लगा लिया। अनन्तर भगवान् शिवजी किरातवेष को छोड़ कर स्वच्छ भस्म को रमाये हुए चन्द्रकला से शोभायमान भाल देश से सुशोभित कलेवर को धारण कर प्रकट हो गये। अर्जुन भी साक्षात् वास्तव शङ्कर मूर्ति को देख कर प्रणाम करते हुए उनके सामने नतमस्तक हो गये। उठकर अपने शरीर को बाण कवच वर्म आदि से शोभायमान देख कर अर्जुन चकित हो गये। दुन्दुभि की दिव्य ध्वनि होने लगी। आकाश से पृथिवी पर देव लोग फूलों की वर्षा करने लगे। इन्द्र प्रभृति लोकपाल विमान पर चढ़ कर आकाश को भासित करते हुए अत्यन्त विराजमान होने लगे। शीतल मन्द सुगन्ध पवन बहते हुए भगवान् शङ्कर की श्रान्ति शान्ति करने लगे। अर्जुन भी तपस्या का फल प्राप्त कर अत्यन्त आनन्द से शङ्कर की स्तुति करने लगे। अन्त में शिव को वाणी और मन का भी अगोचर बतलाते हुए अनेकों प्रकार स्तुति कर अर्जुन ने भगवान् से अभीष्ट वर मांगा—हे प्रभो! जिस तरह मानी व धर्मात्मा मेरे बड़े भाई युधिष्ठिर भी धर्मध्वंसी छलकपटी शत्रुओं पर विजय प्राप्त करें ऐसा साधन देकर मुझे कृतार्थ कीजिये। बाद में आशुतोष शिवजी ने नतमस्तक धनञ्जय को सान्त्वना देकर गुप्त रहस्य के साथ पाशुपतास्त्र और समग्र धनुर्वेद पढ़ाया। भगवान् धनुर्वेद मूर्तिधारण कर शिवजी की प्रदक्षिणा कर उपस्थित हुए। इन्द्रादि ने भी अमोघ आशीर्वादपूर्वक अपने अपने अस्त्रों को देकर अर्जुन को प्रोत्साहित किया। अन्त में शिवजी से आदिष्ट होकर अर्जुन अपने घर आये।

—•—

## विषयानुक्रमणिका

---

## पात्र-परिचय

| | |
|---|---|
| वनेचर | ( युधिष्ठिर का गुप्तचर ) |
| युधिष्ठिर | ( महाराज पाण्डु के प्रथम पुत्र धर्मराज ) |
| भीम | ( द्वितीय ) |
| अर्जुन | ( तृतीय ) |
| नकुल | ( ,, चतुर्थ ) |
| सहदेव | ( पञ्चम ) |
| द्रौपदी | ( पञ्च पाण्डवों की धर्मपत्नी ) |
| दुर्योधन | ( कुरुदेशाधिप धृतराष्ट्र का ज्येष्ठ पुत्र ) |
| राधेय-कर्ण | ( कुन्तीपुत्र-सूर्यका औरस ) |
| भीष्म | ( महाराज शन्तनु के पुत्र—भीष्मपितामह ) |
| जामदग्न्य | ( परशुराम ) |
| द्रोण | ( पाण्डवों और कौरवों के गुरु-द्रोणाचार्य ) |
| यक्ष | ( इन्द्र का दूत ) |
| व्यास | ( पराशर पुत्र—महाभारत रचयिता ) |

---

॥ श्रीः ॥

महाकविश्रीभारविप्रणीतं

# किरातार्जुनीयम्

घण्टापथ-प्रकाश-टीकाद्वयोपेतम् ।

## प्रथमः सर्गः

घण्टापथ ( मल्लिनाथी )

अर्धाङ्गीकृतपत्नीकमपि मातानुरागि यत्। पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥
आलम्बे जगदालम्ब हेरम्बचरणाम्बुजम् । शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥
तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसच्छटाः ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याकर्तुमिच्छति ॥
नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥

नानानिबन्धविषमैकपदैर्मिलितान्त साशङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया। नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान्भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥ इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां, 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि

युधिष्ठिरा स्थिर ' इति यादवः । समाययौ सम्प्राप्त । अत्र 'वने वनेचर 'इति द्वयो. स्वर-व्यञ्जनसमुदाययोरेकधावृत्त्या वृत्त्यनुप्रासो नामालङ्कार. । अस्मिन्सर्गे वंशस्थवृत्त, तल्लक्षण—'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ १ ॥

भावार्थ

धरि शीश चरणरज गुरुवर के, करि विनय महेश गजानन का ।
यह चली लेखनी लिखने को, भावानुवाद भारवि कवि का ॥ १ ॥

राजा कुरु के वंश में धृतराष्ट्र और पाण्डु दो भाई थे । धृतराष्ट्र के सौ लड़के थे । उन लड़कों का स्वभाव शैशव काल से ही क्रूर था । उन में सब से प्रधान दुर्योधन था । पाण्डु के पाँच पुत्र थे । वे सत्य और सुजनता के अतिरिक्त क्रूरता और नीचता को अपने पास नहीं फटकने देते थे । बाल्य काल से ही वे होनहार थे । उनकी कला कुशलता की समानता करने में दुर्योधन अपने को असमर्थ पाकर उनसे द्वेष करने लगा जिसके परिणाम स्वरूप उसने उन्हें तेरह वर्षों के लिये निर्वासित कर दिया । पाण्डु के पुत्र, युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेव के नाम से पुकारे जाते थे । लोग इन्हें पाण्डव कहा करते थे । जब ये पाण्डव निर्वासित कर दिये गये ऐसी विषमावस्था में उन लोगों को दुर्योधन के शासन का पूर्णतया ज्ञान करना असम्भव सा था । सचमुच सब की रक्षा परमेश्वर करता है । एक किरात युधिष्ठिर के समक्ष उपस्थित हुआ । युधिष्ठिर ने उसे सिखलाकर पठाया और वह ब्रह्मचारी का स्वरूप बनाकर हस्तिनापुर गया । वहाँ कुछ दिन रहकर वहाँ की परिस्थिति का गम्भीर अध्ययन किया और आकर सम्पूर्ण वृत्तान्त बिना किसी भय और संकोच के युधिष्ठिर से निवेदन किया । पहले ब्रह्मचारियों का सर्वत्र अबाध प्रवेश था इसीलिये ब्रह्मचारी के स्वरूप में ही वह वहाँ गया था । बस, यहीं से भारवि की कथा का श्रीगणेश है ।

कुरु देश निवासियों के स्वामी की राज्यश्री की रक्षा करने में समर्थ, प्रजा वर्ग के साथ किये जाने वाले व्यवहार को समझने के लिये जो किरात ब्रह्मचारी के स्वरूप में भेजा गया था वह सम्पूर्ण वृत्तान्तों का यथावत् ज्ञान कर के युधिष्ठिर के पास द्वैतवन में (जहाँ वे वास करते थे) लौट कर आया ॥ १ ॥

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—

कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥२॥

कृतप्रणामस्येति । कृतप्रणामस्य तत्कालोचितत्वात्कृत      स्य सपत्नेन रिपुणा दुर्योधनेन । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय क्रियाग्रहणात्सम्प्रदानत्वम् । निवेदयिष्यतो ज्ञापयिष्यतः । 'लृटः सद्वा' इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे

विव्यथे व्यथामवाप्तीति मनसि न चचालेत्यर्थः । 'व्यथ भयसञ्चलनयोः' इति धातोर्लिट् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—न हीति । हि यस्मात् । हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति अन्यथा कार्यविघातकत्वात् स्वामिद्रोहिणः स्युरिति भावः । 'आलौकिकसमान्यमस्मपाभाषितमभ्युदकत्वं चेति वाग्गुणाः' इति नीतिवाक्यामृते ॥ २ ॥

( इस का कारण है—जब अपने स्वामी से जय प्राप्त होता है अथवा जब वह स्वामी के समक्ष होता है प्रणाम करे । अतः ) उसने उस समय युधिष्ठिर को प्रणाम किया । शत्रुओं के द्वारा अपहृत वसुन्धरा के सम्बन्ध वृत्तान्त को सुनाकर ( चाहे वह स्वामी को प्रिय हो अथवा अप्रिय ) निवेदन करने में उसके मन में किसी प्रकार की भावना उत्पन्न न हुई क्योंकि हितैषी के कल्याण की कामना करने वाले पुरुष व्यर्थ की खोखली वाणी नहीं निकालते ।

तथाऽपि प्रियार्हे राज्ञि अनुचितशत्रोर्विजय युधिष्ठिरस्य स्वाम्यनुज्ञया न ब्रूयादित्याशयेनाह—

द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥

द्विषामिति । रहस्येकान्ते स वनेचरो द्विषां शत्रूणाम् । कर्मणि षष्ठी । विघाताय विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । भाववचनाश्च इति तुमर्थे घञन्तात् तत्र तादर्थ्येऽपि न दोषः । तथापि प्रयोजनवैचित्र्यविशेषवत्त्वान्न द्वारत्वेन व्याचष्टे । विधातुं व्यापारं कर्तुमिच्छतः । 'समानकर्तृकेषु तुमुन्' । द्विषो विहन्तुमुद्युक्तानस्येत्यर्थः । अत एव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य । सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । उदारस्य भाव औदार्यम् अर्थसम्पत्तिः । तयोर्द्वन्द्वः सौष्ठवौदार्ये । अत्रौदार्यशब्दस्याल्पाच्तरत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्र हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव एव निपातस्यानित्यत्वज्ञापनान्न पूर्वनिपातः । तदुक्तं काशिकायाम्— अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारलिङ्गम् इति । स एव विशेषः । तयोर्वा विशेषः । तेन शालते शोभत इति सौष्ठवौदार्यविशेषशालिनी ताम् । ताच्छील्ये णिनिः । विनिश्चितार्थां विशेषतः प्रमाणतो निश्चितार्थामिति वाचमाददे स्वीकृतवान् । उवाचेत्यर्थः ॥ ३ ॥

एकान्त स्थान में उसने शत्रुओं के विनाश करने के अभिलाषी भूपति ( युधिष्ठिर ) से प्रिय अथवा अप्रिय संवाद सुनाने की आज्ञा प्राप्त कर—सुन्दरता और उदारता से विशेष महत्त्वपूर्ण और विशेष प्रमाणों से निर्णीत वास्तविक बातों से भरा अर्थात् युक्ति मधुर और स्पष्ट निवेदन किया ॥ ३ ॥

नोट—आदत्ते = आङ् + दा + क्विप् । दा धातु का अर्थ है देना परन्तु, आ उपसर्ग से 'करना' अर्थ द्योतित होता है ॥

प्रथमं तावत्प्रियनिवेदकमात्मानं प्रत्यश्लोकं याचते—

क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥४॥

क्रियास्विति । हे नृप ! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैः । चारा द्विविधित्यर्थः । चरन्तीति चराः । पचाद्यच् । त एव चाराः । यो पचादिजन्त्वाप्रमादित्वाद्भ्यस्तम । त एव चक्षूंषि येषां ते चारचक्षुषः । 'स्वपरमण्डले कार्याकार्यावलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते । प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः । सत्यमेव वक्तव्या इत्यर्थः । चारापचारे चक्षुरपचारवदापदः पदे पदे विपाक इति भावः । अतोऽमतार्थत्वाद्धेतोः । असाध्वप्रियं साधु प्रियं वा । मदुक्तमिति शेषः । क्षन्तुं सोढुमर्हसि । कुतः । हितं पथ्यं मनोहारि प्रियं च वचो दुर्लभम् । अतो मदुक्तोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः ॥ ४ ॥

कार्य सम्पादन करने के लिये नियुक्त किये गये भृत्यों का कर्तव्य है—"वे अपने स्वामी के साथ कपट व्यवहार न करें" क्योंकि वे ही उनके नेत्र हैं ( नौकरों के द्वारा स्वामी लोग सम्पूर्ण बातों का पता लगाते हैं ) इस लिये यदि अप्रिय बात हो तो आप क्षमा करें । कारण यह है कि कामप्रद और साथ ही साथ हितकारक वचन का सर्वथा अभाव सा रहता है । किसी का कथन है—होना और हँसना साथ २ नहीं होता "दुइ एक सङ्ग न होंहि भुआलू । हँसब ठठाइ फुलाइब गालू ॥" सच बात तो यह है कि मुझे अपना कर्तव्य पालन करने के लिये यथार्थ निवेदन करना होगा, चाहे वह आपको भला लगे या बुरा । यदि कदाचित् कुछ बात ऐसी भी हो तो उसके लिये क्षमाप्रार्थी हूँ क्योंकि प्रिय और उपकारक वचनों का परस्पर सामानाधिकरण्य नहीं हो सकता ॥ ४ ॥

तर्हि तूष्णींभाव एव कर्तव्य इत्यत आह—

स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।
सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥५॥

स इति । यः सखाऽमात्यादिरधिपं स्वामिनं साधु हितं न शास्ति नोपदिशति । 'ब्रुविशासि—' इत्यादिना शास्तेर्दुहादिपाठाद् द्विकर्मकत्वम् । स हितानुपदेष्टा । कुत्सितः सखा किंसखा । दुर्मन्त्रीत्यर्थः । 'किमः क्षेपे' इति समासान्तप्रतिषेधः । तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हिताद्धितोपदेष्टुः सकाशात् । 'आख्यातोपयोगे' इत्यपादाने पञ्चमी । न संशृणुते न शृणोति । हितमिति शेषः । 'समो गम्यृच्छि—' इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम् । न वैषयिकम् । स हित-

सम्प्रति यद्वक्तव्यं तदाह—

विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

विशङ्कमान इति । सुखेन युध्यते सुयोधनः । 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः' । नृपासनस्थः सिंहासनस्थोऽपि । वनमधिवसतीति वनाधिवासिनो वनस्थात् । राज्यभ्रष्टादपीत्यर्थः । भवतस्त्वत्तः पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाणः सन् । दुष्टमुदरमस्येति दुरोदरं द्यूतम् । पृषोदरादित्वात्साधुः । 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । तस्य छद्मना मिषेण जितां लब्धां दुर्नयार्जितां जगतीं महीम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । नयेन नीत्या जेतुं वशीकर्तुं समीहते व्याप्रियते । न तूदास्त इत्यर्थः । बलवत्स्वामिकमविशुद्धागमं च धनं बुभुक्षतस्तस्य कुतो मनसः समाधिरिति भावः । अत्र 'दुरोदरच्छद्मजिताम्' इति विशेषणद्वारेण पदार्थस्य वाक्यार्थं प्रति हेतुत्वेनोपन्यासात् द्वितीयकाव्यलिङ्गमलङ्कारः । तदुक्तं—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" ॥ ७ ॥

सुयोधन राज्यासनाधिरूढ है और आप निर्वासित हैं तो भी वह आप से अपने पराभव की आशङ्का करता हुआ, द्यूत (जुआ) के व्याज से जीती हुई पृथ्वी को अब नीतिपूर्वक जीतने की कामना कर रहा है। अभिप्राय यह है कि उसने अन्याय से राज्य प्राप्त किया है। इस बात का उसे खेद है अतः अब नीतिपूर्वक भी विजयी बनने के लिये यत्नशील है ॥ ७ ॥

'नयेन जेतुं जगतीं समीहते' इत्युक्तम् । तत्प्रकारमाह—

तथाऽपि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन्भूतिमनार्यसङ्गमाद् वरं विरोधोऽपि समं महात्मभिः ॥८॥

तथाऽपीति । तथाऽपि राज्यस्थोऽपि । जिह्मो वक्रः । वञ्चक इति यावत् । स दुर्योधनो भवज्जिगीषया । गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः । 'हेतौ' इति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणसमृद्ध्या । करणेन । शुभ्रं यशस्तनोति । स खलो गुणलोभनीयाः स्वरसम्पद आत्मसात्कर्तुं खलोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महानस्त्यस्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गलाभे नीचसङ्गमादुत्कर्षावहत्वादित्याह—समिति । तथा हि । भूतिं समुन्नयन्नुत्कर्षमापादयन् । 'लटः शतृशानचौ—' इत्यादिना शतृप्रत्ययः । पुनर्लड्ग्रहणसामर्थ्यादप्रथमासामानाधिकरण्यम् । महात्मभिः समम् । सहेत्यर्थः । 'साकं सत्रा समं सह' इत्यमरः । अनार्यसङ्गमाद् दुर्जनसंसर्गात् । 'पञ्चमी विभक्ते' इति पञ्चमी । विरोधोऽपि वरं मनाक्प्रियम् । 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । अत्र नैष्फल्यपेक्षया मनाक्प्रियत्वं विरोधस्य 'भूतिं समुन्नयन्' इत्यस्य पूर्ववाक्यान्वये समा-

एव वाक्यार्थस्य पुनराकाङ्क्षासमासपुनरात्तत्वदोषापत्तिः । तदुक्तं काव्यप्रकाशे— समासपुनरात्तात्समासपुनरात्तकम् इति । न च वाक्यान्तरमेतत् । येनोक्तदोष परिहारः स्यात् । अर्थान्तरन्यासालङ्कारः । स च सूक्तिसमुच्चयनस्य पदार्थविशेषण द्वारा विरोधवत्वे प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥

तात्पर्य है सो यह कुटिल नृप ( दुर्योधन ) श्रीमान् को जीतने की अभिलाषा से दान दाक्षिण्यादि गुणों से अपने विशाल यश की अभिवृद्धि कर रहा है। क्योंकि ऐश्वर्य की वृद्धि करते हुये दुष्टों के सम्पर्क की अपेक्षा सज्जनों के साथ वैमनस्य करना भी कुछ अच्छा है ॥८॥

'ननु कातर्यं केवला नीतिः' इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह—

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

कृतेति । षण्णां वर्गः षड्वर्गः । अरीणामन्तः शत्रूणां षड्वर्गोऽरिषड्वर्गः । जित कामादिवर्गसमास' । तस्य जयः कृतो येन तेन तथोक्तेन । जितेन्द्रियेणेत्यर्थः । विजिता विकारं प्रजापालनमिति भावः । अगम्यरूपां दुष्प्रापामनुष्ठातुमशक्याम् । मनोरियं मानवी ताम् । मनुप्रतिपादितामित्यर्थः । पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रप त्तुमिच्छुना । प्रपत्ते सन्नन्तादुप्रत्ययः सनि मीमा—'इत्यादिनेसादेशः' । अत्र लोपो ऽभ्यासस्य इत्यभ्यासलोपः । अस्ता तन्द्रिरालस्यं यस्य तेनास्ततन्द्रिणा । अलसो ऽतन्द्र । तन्द्रिशब्दो नान्तः । तस्मात् । 'वदिक्षाम्यः' इत्यौणादिकः क्रिन्प्रत्ययः इति कारादिकोशी वा ङीष् प्रत्ययः इति । तन्द्रीप्रमीलातन्द्रिति कोषस्तोऽपि इति स्वामी । तथा रामायणे प्रयोगः—'निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्' इति । तेन दुर्योधनेन । पुरुषस्य कर्म पौरुषं पुरुषकारः, उद्योग इति यावत् । युवादित्वादण् प्रत्ययः । 'पौरुषं पुरुषस्योक्ते भावे कर्मणि तेजसि' इति विश्वः । नक्तं च दिवा च नक्तंदिवम् । अहोरात्रयोरित्यर्थः । 'अचतुर' इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वनिपातेऽव्ययसमा सान्तः । विभज्यास्मै वेलाविशेषं कर्तव्य विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्यते ॥ ९ ॥

वह ( दुर्योधन ) काम क्रोध लोभ मोह मद और अहङ्कार ये जो मनुष्यों के छः शत्रु हैं इन्हें जीतकर मनुष्यमात्र के लिये दुर्गम ( दुष्प्राप्य ) मनु के द्वारा प्रतिपादित जो शासनपद्धति है उसे कार्य रूप में लाने की ( प्राप्त करने की ) इच्छा रखकर और आलस्य को दूर भगाकर समय-विभागानुकूल नीति-पथ का आधार लेकर अपने पुरुषार्थ को विस्तृत कर रहा है ॥९॥

सम्प्रति भृत्यानुरागमाह—

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥१०॥

सखीनिति। गतस्मयो निरहङ्कारोऽत एव स दुर्योधनः सन्ततमनारतं साधु सम्यक्। अकपटमित्यर्थः। अनुजीविनो भृत्यान्। प्रीतियुजः स्निग्धान्सखीनिव मित्राणीव। दर्शयते। लोकस्येति शेषः। 'हेतुमति च' इति णिच्। 'णिचश्च' इत्यात्मनेपदम्। शोभनं हृदयं येषां तान्सुहृदो मित्राणि च। 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः। बन्धुभिर्भ्रात्रादिभिः समानमानांस्तुल्यसत्कारान् दर्शयते। बन्धूनां समूहो बन्धुता ताम्। 'ग्रामजनबन्धुसहायेभ्यस्तल्'। कृतमाधिपत्यं स्वाम्यं यस्याः सा तां कृताधिपत्यामिव दर्शयते। बन्धूनधिपतीनिव दर्शयतीत्यर्थः। यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्सम्भावयतीत्यर्थः। अनुजीव्यादीनां 'कर्तुरीप्सिततमं कर्म' इति कर्मत्वम्। पूर्वे त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—स राजाऽनुजीव्यादीन्सख्यादीनिव दर्शयते। सख्यादय इव ते तं स पश्यन्ति। तथाविधभावेन पश्यतस्तांस्तथा दर्शयते। स्वयमेव कुण्डलानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः। अर्थात्तस्येप्सिततमकर्मत्वम्। अणि कर्तुरनुजीव्यादेः 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति पाक्षिकं कर्मत्वम्। एवं चात्राण्यन्तकर्मणो राज्ञो ण्यन्ते कर्तृत्वेऽपि 'आरोहयते हस्ती स्वयमेव' इत्यादिवद्भूयमाणकर्मान्तराभावाभावात् णेरणाविति सूत्रस्य विषय इति मत्वा 'णिचश्च' इत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु णेरणाविति सूत्रविषयत्वमस्योक्तम्। यथाऽऽह—"पश्यन्ति भृत्या राजानं' 'दर्शयते भृत्यान् राजा' 'दर्शयते भृत्ये राजा' अत्रात्मनेपदं सिद्धं भवति" इति। अत्राह कैयटः—"ननु कर्मान्तरसद्भावादत्रात्मनेपदेन भाव्यम्। उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते—'अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति। यथा—'स्थलमारोहयति मनुष्यान्' इति। इह त्वण्यन्तावस्थायां कर्तृणा भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमि"ति ॥ १० ॥

वह (दुर्योधन) अहङ्कार से पृथक् रहकर अपने कर्मचारियों को [illegible] सर्वदा प्रीति-पात्र मित्रों की तरह, मित्रों का आदर (सत्कार) ठीक निजी गोत्र कुटुम्बियों की तरह, और जो उसके सगे कुटुम्ब के लोग हैं उनका साक्षात् राज्याधिकारी की भाँति आदर करता है। तात्पर्य यह कि उसके व्यवहार से सब लोग सन्तुष्ट हैं ॥ १० ॥

न चायं त्रिवर्गाप्रमादीत्याह—

असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया।
गुणानुरागादिव सख्यमीयिवान् न बाधतेऽस्य त्रिगणः परस्परम्॥११॥

असक्तमिति। यथायथं यथास्वं विभज्य, असङ्कीर्णरूपं विविच्येत्यर्थः। 'यथास्वे यथायथम्' इति निपातनात् द्विर्भावो नपुंसकत्वं च। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। पक्षे पातः पक्षपात आसक्तिविशेषः समस्तुल्यो यस्यां तया समपक्षपातया। भक्त्याऽनुरागविशेषेण। पूज्येष्वनुरागो भक्तिरित्युपदेशः।

प्रयोग जो दुर्योधन के द्वारा किया जाता है दान के बिना नहीं किया जाता (क्योंकि लोभी पुरुष को वश में लाने के लिये दान की आवश्यकता पड़ती है)। और जो वह प्रचुर मात्रा में दान करता है वह सत्कारपूर्वक करता है। और उसका विशेष सत्कार गुण के बिना नहीं होता अर्थात् वह योग्य व्यक्तियों का ही सत्कार करता है ॥ १२ ॥

अथ दण्डप्रकारमाह—

वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् ॥१३॥

वसूनीति। वशी स दुर्योधनो वसूनि धनानि वाञ्छन्न। लोभान्नेत्यर्थः। 'वसु तोये धने मणौ' इति वैजयन्ती। निहन्तीति शेषः। तथा मन्युना कोपेन न च। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति स्मरणादित्यर्थः। किन्तु निवृत्तकारणो निवृत्तलोभादिनिमित्तः सन् स्वधर्म इत्येव। स्वस्य राज्ञः सतो ममायं धर्मो मयेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः। 'अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति' ॥ इति स्मरणादिति भावः। गुरूपदिष्टेन प्राड्विवाकोपदिष्टेन। 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद् व्यवहारमनुक्रमात् ॥' इति नारदस्मरणात्। दण्डेन दमेन। शिक्षयेत्यर्थः। रिपौ सुतेऽपि वा। स्थितमिति शेषः। एतेनास्य समदर्शित्वमुक्तम्। धर्मविप्लवं धर्मव्यतिक्रमम्। अधर्ममिति यावत्। निहन्ति निवारयति। दुष्ट पुत्रस्य शास्ता शिष्ट एव मन्युर्न तु सम्बन्धनियमः पक्षपातोऽस्तीत्यर्थः। ॥ १३ ॥

वह जितेन्द्रिय होकर, न तो धन की लालच से न क्रोध से किसी को दण्ड देता है या अपराध मुक्त करता है, किन्तु वह क्रोध लोभ से निवृत्त होकर गुरूपदिष्ट धर्मशास्त्रानुकूल शत्रु और पुत्र में भेद न समझकर, दण्ड के द्वारा धर्म विप्लव को शमन करना अपना कर्तव्य समझता है, क्योंकि जो दण्डार्ह नहीं उन्हें दण्ड देना तथा दण्डनीयोंको अपराध मुक्त करना, राजा को अपयश का भागी बनाता है और पश्चात् नरक में झोंक देता है ॥ १३ ॥

सम्प्रति भेदकौशलं दर्शयति—

विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः।
क्रियाऽपवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः ॥१४॥

विधायेति। शङ्का सञ्जाताऽस्य शङ्कितोऽप्रमत्तः सन् परितः सर्वत्र स्वपरमण्डले परेतरानात्मीयान्। अवञ्चकानिति यावत्। यद्वा परानितरयन्ति भेदेनात्मसात्कुर्वन्तीति परेतरान्। तत्करोतीति ण्यन्तात्कर्मण्यण्प्रत्ययः। रक्षन्तीति रक्षान् रक्षकान्। मन्त्रगुप्तिसमर्थानित्यर्थः। 'नन्दिग्रहि—' इत्यादिना पचाद्यच्। विधाय कृत्वा। नियुज्येत्यर्थः। अशङ्किताकारमुपैति। स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन्परमुखे-

लैव पराभिभवतीत्यर्थः। न च तान् रक्षत्युपेक्षते येन तेऽपि विकुर्वीरन्नित्याह—क्रियेति। क्रियापवर्गेषु कर्मसमाप्तिष्वनुजीविसात्कृता भृत्याधीना कृताः। अपरावर्तितया दत्ता इत्यर्थः। 'देये त्रा च' इति सातिप्रत्ययः। सम्पदोऽस्य राज्ञः कृतज्ञतामुपकारित्वं वदन्ति। प्रीतिदानैरेवास्य कृतज्ञत्वं प्रकाश्यते न तु वाङ्मात्रेणेत्यर्थः। कृतज्ञे राजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च रक्षन्तीति भावः॥ १४॥

दुर्योधन स्वराष्ट्र पर इस प्रकार मन्त्र-गोपन-समर्थ आत्मीय जनवादियों को कार्यभार सौंप कर स्वयं उसका निरीक्षण कर निरुद्वेग का आनन्दानुभव करता है। कार्य्य समाप्ति के पश्चात् सेवकों को वेतन के रूप में प्रदान की गयी सम्पत्तियाँ इसकी कृतज्ञता सूचित करती है॥ १४॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति—

अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः॥ १५॥

अनारतमिति। तेन राज्ञा पदेषूपायदेशकालादिषु। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। सम्यगसंकीर्णं यथा तथा च विभज्य विविच्य। विनियोग एव सत्क्रिया अनुग्रहः सत्कार इति यावत्। येषां ते विनियोगसत्क्रियाः। उपायेषु सम्यगनुष्ठिता इत्यर्थः। उपायाः सामादयः। संघर्षं परस्परस्पर्धामुपेत्येवेत्युत्प्रेक्षा। परिबृंहितायतीः अभिवृद्धोत्तरकालाः स्थिरा इत्यर्थः। अर्थसम्पदोऽर्थसमृद्धीः फलन्ति प्रसुवत इत्यर्थः॥ १५॥

इसने (दुर्योधन ने) बल-योग्य कार्यों में साम दान दण्ड और भेद नीतियों का प्रयोग किया है वे समुचित नियुक्ति से सत्कृत हो कर एक दूसरे से परस्पर स्पर्धा करती हुई उत्तरोत्तर वृद्धिशालिनी ऐश्वर्य राशि का उत्पादन प्रसव करती है॥ १५॥

अथैश्वर्यमेवाह—

अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरम्।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः॥ १६॥

अनेकेति। अयुग्मच्छदस्य सप्तपर्णस्य गन्ध इव गन्धो यस्यासावयुग्मच्छदगन्धिः। 'सप्तम्युपमान—' इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च। 'सप्तमाद्यन्त' इति समासान्त इकारः। नृपाणामुपायनान्युपहारभूता ये दन्तिनस्तेषां मदः। 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। राज्ञामपत्यानि पुमांसो राजन्याः क्षत्रियाः। 'राजश्वशुराद्यत्' इति यत्प्रत्ययः। राज्ञोऽपत्ये जातिग्रहणम्। रथाश्चाश्वाश्च रथाश्वम्। सेनाङ्गत्वादेकवद्भावः। अनेकेषां राजन्यानां रथाश्वेन संकुलं व्याप्तं तदीयमास्थाननिकेतनाजिरं सभामण्डपप्राङ्गणं भृशमार्द्रतां पङ्किलत्वं नयति। एतेन महासम्पत्तिरस्यो

का । अत एवोदात्तालङ्कारः । तथा चालङ्कारसूत्रम्—'समृद्धिमद्वस्तुवर्णनमुदात्तः' इति ॥

सुयोधन के सभामण्डप का प्राङ्गण ( आंगन ) अनेक राजाओं के रथ और घोड़ों से व्याप्त रहता है। उसे राजाओं से उपहार में आये हुये मत्त हाथियों का मद, जिसमें विषमच्छद ( छितौन ) के गन्ध सदृश गन्ध होता है, आर्द्र बनाये रहता है। ( इससे सुयोधन की अर्थ सम्पत्ति का परिचय मिलता है ) ॥ १६ ॥

नोट—छितौन—इसमें सात सात पत्ते एक एक डण्ठलमें होते हैं अतः इसे विषमच्छद कहते हैं।

सम्प्रति जनपदक्षेमकरत्वमाह—

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति ॥ १७ ॥

सुखेनेति । चिराय तस्मिन् दुर्योधने क्षेमं वितन्वति क्षेमङ्करे सति । देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः । ते न भवन्तीत्यदेवमातृका नदीमातृका इत्यर्थः । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । एतेनास्य कुल्याऽऽद्युपायसंपादकत्वमुक्तम् । कुरूणां निवासाः कुरवो जनपदविशेषाः । कृष्टेन पच्यन्त इति कृष्टपच्याः । 'राजसूय—' इत्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः । तद्विपरीता अकृष्टपच्या इव । कृषिरेषामस्तीति ते कृषीवलाः, कर्षकैरित्यर्थः । 'रजःकृषि—' इत्यादिना वलच् प्रत्ययः । 'वले' इति दीर्घः । सुखेनायासेन लभ्या लब्धुं शक्याः सस्यसम्पदो दधतो धारयन्तः । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । चकासति । सर्वोत्कर्षेण वर्तन्त इत्यर्थः । 'अदभ्यस्तात्' इति झेरदादेशः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । सम्पन्नजनपदत्वादनन्तापकारत्वाच्च दुःसाध्योऽयमिति भावः ॥ १७ ॥

( सुयोधन ) चिरकाल से प्रजा के अभ्युदय के निमित्त प्रयत्नशील रहता है। उसका राष्ट्र वृष्ट्यम्बुजीवी नहीं है किन्तु उसने आवश्यकतानुसार, जगह २ पर कुएँ, तालाब और नहरों का निर्माण कराया है कृषकों को बिना अधिक परिश्रम किये ही अन्न का ढेर सुलभ है जिससे उसके देश के निवासी हरे भरे हैं। तात्पर्य यह कि उसके सुप्रबन्ध से उसकी प्रजा दुष्काल का अनुभव कभी नहीं करती ॥ १७ ॥

अत एव जनपदानुवर्त्तिनः कामधर्यलाभ इत्यत आह—

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥ १८ ॥

उदारेति । उदारकीर्तेर्महायशसः । 'उदारो दातृमहतोः' इत्यमरः । दयावतः परदुःखप्रहाणेच्छोः । अत एव प्रशान्तबाधं प्रशमितोपद्रवं यथा स्यात्तथेति क्रियाविशेषणम् । उदयविशेषणं वा । 'वा दान्तशान्त—' इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेनोदयं वृद्धिं दिशतः सम्पादयतो वसूपमानस्य कुबेरोपमस्य । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अस्य दुर्योधनस्य गुणैर्दया-

सुयोधनः सञ्चरितैः शुद्धचरितैः । अवञ्चकैरित्यर्थः । चरन्तीति चरास्तैश्चारैः । प्रणिधिभिः । ] महीभृतां क्रिया निःशेषं वेद वेत्ति । 'विदो लटो वा' इति णलादेशः । स्वरहस्य तु न कश्चिद्वेदेत्याह—महोदयैरिति । धातुरिव तस्य दुर्योधनस्येहितमुद्योगो महोदयैर्महावृद्धिभिः । हितमनुबध्नन्त्यनुबध्नन्तीति हितानुबन्धिभिः । स्वन्तैरित्यर्थः । फलैः कार्यसिद्धिभिः प्रतीयते ज्ञायते । फलानुमेयास्तस्य इत्यर्थः ॥ २० ॥

वह ( सुयोधन ) जिस कार्य्य का आरम्भ करता है उसे समाप्त करके ही छोड़ता है वह अपने शुद्ध व्यवहार करने वाले गुप्तचरों से राजाओं का सम्पूर्ण वृत्तान्त जानता है । उसके शुभेच्छु लोग भी, ईश्वरीय इच्छा के समान, क्रियाजनित प्रचुर फलसिद्धि से उसके कार्य्य का अनुमान कर सकते हैं । सारांश यह कि कार्य्य निष्पन्न होने पर ही उसका भेद खुलता है ॥ २० ॥

निग्रहमाह—

न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥२१॥

नेति । तेन राज्ञा क्वचित्कुत्रापि । सह ज्यया मौर्व्या सज्यम् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । धनुर्नोद्यतं नोर्ध्वीकृतम् । आननं च कोपविजिह्मं कोपकुटिलं न कृतम् । यस्य कोप एव नोदेति कुतस्तस्य धनुरुद्यतिरिति भावः । कथं तर्ह्याज्ञां कारयति राज्ञ इत्यत आह—गुणेति । गुणेषु दयादाक्षिण्यादिष्वनुरागेण प्रेम्णा । माल्यपक्षे सूत्रानुरागेण । यद्वा सौरभ्यगुणकामेन । नराधिपैरस्य शासनमाज्ञा । मालैव माल्यं तदिव । 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्' इति क्षीरस्वामी । शिरोभिरुह्यते धार्यते । 'वचिस्वपियजादीनां किति' इति वहि सम्प्रसारणम् । अत्रोपमा स्फुटैव ॥ २१ ॥

उसने धनुष पर प्रत्यञ्चा ( डोरी ) आरोपित करके किसी को युद्ध के लिये आह्वान नहीं किया और न तो क्रोध से भ्रूभङ्ग ही किया, तथापि राजन्य वर्ग उसके गान दाक्षिण्यादि गुणों से आकृष्ट होकर पुष्पमाल्य की भाँति उसकी आज्ञा शिरोधार्य्य करता है ॥ २१ ॥

सम्प्रत्यस्य धार्मिकत्वमाह—

स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ॥२२॥

स इति । इद्धशासनोऽप्रतिहताज्ञः स दुर्योधनो नवयौवनोद्धतं प्रगल्भम् । दुरन्धरमित्यर्थः । दुःखेन शास्यत इति दुःशासनस्तम् । 'भाषायां शासियुधि—' इत्यादिना खलर्थे युच्प्रत्ययः । यौवराज्ये युवराजकर्मणि । ब्राह्मणादित्वात्ष्यञ् । निधाय । नियुज्येत्यर्थः । पुरोधसा पुरोहितेनानुमतोऽनुज्ञातः । तस्मिन्याजके सतीत्यर्थः । तदुक्तकृते दोषसम्भवादिति भावः । 'निष्ठा' इति भूतार्थे क्तः । न तु 'मति-

अनुस्मृताखण्डलसूनुविक्रम' स्मृतार्जुनपराक्रम सुहृत्सुहृदादिदुःसहान्मन्त्रपदान्मन्त्र शब्दात्स्मारकाद्धतो । आखण्डलसूनुरिन्द्रानुज । उपेन्द्रो विष्णुरिति यावत् । 'सूनु पुत्रेऽनुजे रवौ' इति विश्व' । तस्य वि पक्षी । गरुड इत्यर्थः । तस्य क्रम पादविक्षेप । सोऽनुस्मृतो येन स तथोक्त, स्मृतगरुडमहिमा । उरग इव नतानन सन् । व्यथते दु खायते । 'पीडा बाधा व्यथा दु खम्' इत्यमर । अत्युत्कटभयदोषादिविकारा दुर्वारा इति भाव । 'सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्' इति न्यायादर्जुनोत्कर्षकथन युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥ २४ ॥

जिस तरह भुजङ्गम (सर्प) मन्त्रवेत्ता से उच्चारित गरुड और वासुकी के नामयुक्त मन्त्र मन्त्रपद से गरुड के पराक्रम का स्मरण करके नतमस्तक हो जाता है, ठीक वही दशा सुयोधन की हो जाती है। जब कभी जनसमूह की चर्चा में आप का नाम किसी के मुँह से निकल जाता है तो वह बड़े सहन करने में असमर्थ हो जाता है और अर्जुन के बल का स्मरण कर सिर झुका लेता है अर्थात् उसका हृदय प्रतिक्षण सन्तप्त हुआ करता है ॥

निगमयति—

तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां गिरः ॥२५॥

तदिति । तत्तस्मात्त्वयि जिह्म कपट कर्तुमुद्यते । त्वां जिघांसावित्यर्थ' । तत्र तस्मिन्दुर्योधने विधेय कर्तव्यमुत्तर प्रतिक्रियाऽऽशु विधीयतां क्रियताम् । ननु कर्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह—परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशाम् । वार्ताहारिणामित्यर्थ । गिर प्रवृत्तिसारा वार्तामात्रसारा खलु । 'वार्ता प्रवृत्तिर्वृत्तान्त'' इत्यमर । वार्तामात्रवादिनो वयम् न तु कर्तव्यार्थोपदेशसमर्था । अतस्त्वयैव निर्धार्य कार्यमिति भाव । सामान्येन विशेषसमर्थनादर्थान्तरन्यास ॥ २५ ॥

इस लिये, आपको चाहिये कि आपके समूल निर्मूलन करने की चेष्टा में लगे हुए दुर्योधन की प्रतिक्रिया शीघ्रातिशीघ्र करें (यदि आप कहें कि जिस तरह वृत्तान्त बतलाते हो उसी तरह उपाय भी बतलाओ) तो वह हो नहीं सकता, क्यों कि हम लोग दूसरे के कथन पर समाचार के संग्रह करनेवाले हैं। वार्तामात्र के संग्रह का कार्य्य हम लोगों से कराना चाहिए ॥ २५ ॥

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसंनिधौ वचः ॥ २६ ॥

इतीति । वनसंनिवासिनां पत्यौ वनेचराधिप इति गिरमीरयित्वोक्त्वाऽऽत्तसत्क्रिये गृहीतपारितोषिके गते सति । 'बुद्धिमानमेव चाराणां हि चेतनम्' । ते हि सर्वोभाव

२ कि०

अखण्डमिति । आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावैः । स्ववंशजैर्भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नं धृता मही । त्वया । मदं श्च्योततीति मदच्युत् । क्विप् । तेन मदस्राविणा मतङ्गजेन स्रगिवात्महस्तेन स्वकरेण स्वचापलेनेत्यर्थः । अपवर्जिता परिहृता त्यक्ता । स्वदोषादेवायमनर्थागम इत्यर्थः ॥ २९ ॥

इन्द्र के सदृश तेजस्वी आप के पूर्वजों ने ( भरतादिकों ने ) इस वसुन्धरा का अविच्छिन्न उपभोग किया है जिसको आप स्वयं इतनी सरलतापूर्वक हाथ धो बैठे, जितनी सरलता से एक मदस्रावी गजराज सुमनोग्रथित माल्य को ध्वस्त कर देता है अर्थात् पूर्वजों की सञ्चित सम्पत्ति को आप ने बिना किसी प्रयास के ही खो दिया है ॥ २९ ॥

'स्वदोषादेवायमनर्थागम' इत्युक्तम् । स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥३०॥

व्रजन्तीति । मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति, ये मायाविषु मायावत्सु विषये । 'अस्मायामेधा—' इत्यादिना विनिप्रत्ययः । मायिनो मायावन्तः । व्रीह्यादि-भ्यश्चेतीनिप्रत्ययः । न भवन्ति । अत्रैवार्थान्तरं न्यस्यति—प्रविश्येति । शठा अपकारिणो धूर्तास्तथाविधानकुटिलानसंवृताङ्गाननावृतशरीरान्निशिता इषव इव प्रविश्य प्रवेशं कृत्वाऽऽत्मीया भूत्वा घ्नन्ति हि । 'आर्जवं हि कुटिलेषु न नीतिः' इति भावः ॥ ३० ॥

वे अविवेकी पुरुष ( सर्वदा ) पराजित होते हैं जो मायावियों के समक्ष मायावी नहीं बनते अर्थात् 'शठे शाठ्यं समाचरेत्' इस नीति का अवलम्बन नहीं करते । वे मायावी ( वञ्चक ) सरलचित्त व्यक्तियों के अन्तःकरण की बातें जानकर इस प्रकार गला घोंटते हैं जैसे तीक्ष्ण धार वाले बाण कवच रहित शरीर में प्रवेश कर घातक बन जाते हैं ॥३०॥

न च लक्ष्मीनाशमात्रमयमनर्थागमः, किन्तु स्त्रीपैशाचदोषमूलत्वादित्याशयेनाह—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

गुणेति । अनुरक्तसाधनोऽनुकूलसहायवान् । उक्तं च कामन्दकीये—'उद्योगाद-निवृत्तस्य ससहायस्य धीमतः । छायेवानुगता तस्य नित्यं श्रीः सहचारिणी ॥' इति । कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च त्वदन्यस्त्वत्तोऽन्यः । 'अन्यारात्—' इत्यादिना पञ्चमी । क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्यादिभिश्चानुरागिणीं कुलजां कुलक्रमादागतां कुलीनां च मनोरमां श्रियमात्मवधूमिव स्वभार्यामिव 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । परैः शत्रुभिरन्यैश्चापहारयेत् । स्वयमेवापहारं कारयेदित्यर्थः । कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः ॥ ३१ ॥

जिसका क्रोध कुछ न कुछ कर के दिखा देता है और जो आपत्तियों को दूर भगाता है ऐसे पुरुष की पराधीनता लोग स्वयं स्वीकार कर लेते हैं। क्रोध से रहित मित्र भी कोई आदर भी नहीं करता और क्रोधविहीन शत्रु से कोई भय भी नहीं खाता ॥ ३३ ॥

परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥३४॥

परिभ्रमन्निति। लोहितचन्दनोचितः उचितलोहितचन्दनः । 'वाऽऽहिताग्न्यादिषु' इति साधुः । अभ्यस्तरक्तचन्दन इत्यर्थः । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । महारथो रथचारी। सम्प्रत्यपि प्रागिति शेषः । अद्य तु रेणुरूषितो धूलिच्छुरितः पादाभ्यामततीति गच्छतीति पदातिः पादचारी 'अजतिभ्यां च' इत्यनुवृत्तौ 'पादे च' इत्यौणादिक इण्प्रत्ययः । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । अन्तर्गिरि गिरिष्वन्तः । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति विकल्पात्समासान्ताभावः । परिभ्रमन्नयं वृकोदरो भीमः । सत्यधनस्येति सोपालम्भवचनम् । अद्यापि त्वया सत्यमेव रक्ष्यते, न तु भ्रातर इति भावः । तवेति शेषः । मानसं नो दुनोति कच्चिन्न परितापयति किम् । 'कच्चित्कामप्रवेदने' इत्यमरः । स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४ ॥

पहिले जो यह भीम रक्तचन्दन का अभ्यासी थे और उत्तम रथ पर बैठ कर भ्रमण करते थे, वही भीम इस समय धूलि से व्याप्त होकर पैदल पर्वत पथ पर विचरण करते हैं। तो क्या उसकी यह दशा देख कर सत्य पुजारी ( युधिष्ठिर ) का मन सन्तप्त नहीं होता ? ॥३४॥

विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुनाऽऽहरन् करोति मन्युं न कथं धनञ्जयः ॥३५॥

विजित्येति। वासव इन्द्र उपमा उपमानं यस्य स वासवोपम इन्द्रतुल्यो यो धनञ्जयः, उत्तरान्कुरून्मेरोरुत्तरान्मानुषान्देशविशेषान्विजित्य प्राज्यं प्रभूतम्। 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । कुप्यादन्यदकुप्यं हेमरूप्यात्मकम्। 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते। ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरः । वसु धनमयच्छद्दत्तवान्। 'पाघ्रा—'इत्यादिना दाणो यच्छादेशः । स धनं जयतीति धनञ्जयोऽर्जुनः । 'संज्ञायां भृतॄवृजि—'इत्यादिना खच्प्रत्ययः। 'अरुर्द्विषद्—'इत्यादिना मुमागमः । अधुनाऽस्मिन्काले। 'अधुना' इति निपातनात्साधु । तव वल्कवासांस्याहरन्कथं तव मन्युं क्रोधं दुःखं वा न करोति ॥ ३५ ॥

देवेन्द्र के समान पराक्रमशाली जिस अर्जुन ने कुबेर के उत्तर निवासियों पर विजय पताका आरोपित कर सम्पत्ति लाकर समर्पित किया था, आज वही अर्जुन वल्कल वस्त्रधारी बने हैं क्या उन की इस दयनीय दशा को देख कर भी आप का क्रोध जागृत नहीं होता ? ॥

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥३६॥

वनान्तेति । वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । आकारो देह आकृतिः इति वैजयन्ती । विष्वक्समन्तात् । समन्ततस्तु परितः सर्वतो विष्वगित्यपि इत्यमरः । कचाचितौ कचव्याप्तौ । विकीर्णकेशावित्यर्थः । अत एवागजौ गिरिसम्भवौ गजाविव स्थितावेतौ यमौ युग्मजातौ भ्रातरावित्यर्थः । यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च इति विश्वः । विलोकयन् कथं धृतिसंयमौ सन्तोषनियमौ । धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु इति विश्वः । बाधितुं मोक्तुं नोत्सहसे न प्रवर्तसे । तकर—गृहत्यादिना प्रसुत् । अहो ते महद्धैर्यमिति भावः ॥ ३६ ॥

विचारिये आप के इन भाइयों को! ये पहाड़ात मजबूत और छरहरे जङ्गली हाथियों के सदृश हो गये हैं वनस्थली पर शयन करने से इनके शरीर में घट्ठे पड़ गये हैं। इनके केश पाश बिखरे [redacted] हैं। इन्हें देख कर क्या आप धैर्य और नियम का परित्याग करने के लिये तय्यार नहीं हो रहे हैं? ॥ ३६ ॥

अथ राज्ञो दुर्दशां दर्शयितुमुपोद्घातमाह । अनुक्त्वा दर्शयितुमर्थान्तरन्यासमुपोद्घात ।

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः ॥३७॥

इमामिति । इमां वर्तमानाम् । तवेमां तावकीं त्वदीयाम् । तस्येदम् इत्यण् प्रत्ययः । तवकममकावेकवचने इति तवकादेशः । धियं त्वदापद्विषयां चित्तवृत्तिमहं न [redacted] कीदृशी वा न वेद्मि । परदुःखमप्रत्यक्षत्वादिति भावः । विदो लटो वा इति णलादेशः । न चास्माकमन्येनापन्नत्वात् दुःखित्वमनुमातुं शक्यते । धीरादीनामनन्यादृक्त्वादित्याशयेनाह—चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेकप्रकाराः खलु । किन्तु पराङ्मुख्यां भवदापदं विचिन्तयन्त्याः भावयन्त्या मम चेतश्चित्तम् । आधयो मनोव्यथाः । 'उपसर्गे घोः किः' इति किप्रत्ययः । प्रसभं प्रसह्य रुजन्ति भञ्जन्ति । 'रुजो भङ्गे' इति धातोर्लट् । परदुःखानामपि दुःसहा दुःखकारिणी त्वद्विपत्तिरनुभवितारं त्वां न विक्रोशतीति महदाश्चर्यमित्यर्थः । अत्र इति वाक्यार्थी भावयन्तावाधयो इति हेतुर्न भवति । तत्र हेत्वाभिधानाद्वैलक्षण्य विपर्ययत्वादिति ॥ ३७ ॥

मुझे आप की इस बुद्धि का परिचय नहीं मिलता। लोगों की चित्तवृत्तियाँ विलक्षण होती हैं। आप की इन असीम आपत्तियों का स्मरण कर मेरे हृदय में उथलपुथल मच जाती है अर्थात् आप की विपत्तियों के देखने वालों को भी तो असह्य वेदना होती है परन्तु न जाने क्यों आप पर इस का प्रभाव नहीं पड़ता? ॥ ३७ ॥

तदापन्नमेव श्लोकत्रयेणाह—

पुराऽधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥३८॥

पुरेति । यस्त्वं महाधनं बहुमूल्यं श्रेष्ठम् । 'महाधनं महामूल्ये' इति विश्वः । शयनं शय्यामधिरूढः सन् स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः पुरा विबोध्यसे । वैतालिकैरिति शेषः । एवं बोधित इत्यर्थः । 'पुरि लुङ् चास्मे' इति भूतार्थे लट् । स त्वमदभ्रदर्भां बहुकुशाम् 'कुशो कुशा कुशो दर्भः' इति । 'अदभ्रं बहुलं बहु' इति चामरः । स्थलीमकृत्रिमभूमिम् । 'जानपद—'इत्यादिना कृत्रिमार्थे ङीष् । एतेन तु सहस्पर्शास्त्वसुखकम् । 'अधिशीङ्स्थाऽऽसां कर्म' इति कर्मत्वम् । अधिशय्य शयित्वा । 'अयङ् यि क्ङिति' इत्ययङादेशः । अशिवैरमङ्गलैः शिवारुतैः क्रोष्टुवाशितैः । 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलकसुमे' इति वैजयन्ती । निद्रां जहासि । त्यजसीति शेषः ॥ ३८ ॥

( हे नरेन्द्र ! ) पहले आप बहुमूल्य शय्या पर विश्राम करते थे और वैतालिकों के द्वारा स्तुति और गायन रूप माङ्गलिक पाठ से निद्रा त्याग करते थे । वही ( आप ) कुशयुक्ता भूमि पर शयन करते हैं और अमङ्गल सूचक शृगालियों के शब्द से जागरित होते हैं ॥ ३८ ॥

पुरोपनीतं नृप ! रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥३९॥

पुरेति । हे नृप ! यदेतत्पुरोवर्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेनान्धसाऽन्नेन । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । रमणीयस्य भावो रामणीयकं मनोहरत्वमुपनीतं प्रापितम् । अयतेर्द्विकर्मकत्वात्प्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । तत् वन्यफलाशिनस्ते तव तद्वपुः यशसा समं परमतिमात्रं कार्श्यं परैति प्राप्नोति । उभयमपि क्षीयत इत्यर्थः । अत्र सहोक्तिरलङ्कारः । तदुक्तं काव्यप्रकाशे—'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति ॥ ३९ ॥

हे राजन् ! पहले आप का यह शरीर ब्राह्मणभुक्तावशिष्ट अन्न से परिवर्धित होकर रमणीय था, वही ( शरीर ) आज जङ्गली फलों के आहार से अत्यन्त दुर्बल होता जा रहा है और साथ साथ यश को भी क्षीण बना रहा है । यहाँ एक लोकोक्ति है "बाण बाण गये चार हाथ पगहा भी लेते गये" ॥ ३९ ॥

अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥४०॥

अनारतमिति । अनारतं          मणिपीठशायिनौ मणिमयपादपीठशायिनौ यौ

पुर इति । किं च धामवतां तेजस्विनाम् । परनिकारासहिष्णूनामित्यर्थः । पुरः सरन्तीति पुरस्सरा अग्रेसराः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । यशोधना भवादृशा' सुधु सहमतिषु सहमीदृक्षमुक्तप्रकारं निकारं पराभवं प्राप्य इति सन्तोषमधिकुर्वते चेत्तर्हि हन्त हृति खेदे । मनस्विता अभिमानिता निराश्रया सती हता । तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अत पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्यासह्यत्वेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति 'प्रसहनं परिभवः' इति काशिका, तथाऽप्यस्याः कर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः —' इत्यात्मनेपदं प्रसिद्धम् ॥ ४३ ॥

भाव–जैसे कीर्तिरूपधन तेजस्वियों के अभिभावक, यदि इस प्रकार के असह्य पराभव को प्राप्त होकर सन्तोष कर जाते हैं तो मनस्विता निराश्रय हो कर इस दुनिया से चल बसेगी ॥ ४३ ॥

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥४४॥

अथेति । अथ पक्षान्तरे निरस्तविक्रमः सन् । चिराय चिरकालेनापि क्षमां शान्तिमेव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सुखस्य साधनं पर्येषि अवगच्छसि तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धरः । पचाद्यच् । जटानां धरो जटाधरः सन्निह वने पावकं जुहुधि । पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । निरस्तस्य किं धनुषेत्यर्थः । 'हुझल्भ्यो हेर्धिः' ॥ ४४ ॥

यदि शौर्य का परित्याग कर एक क्षमा को चिरकाल सुख की सामग्री मानना अभीष्ट हो तो राजाओं के चिह्न स्वरूप धनुष को फेंक दीजिये और जटा बढ़ाकर इसी जगह ( द्वैतवन में ) अग्नि देव में आहुति प्रक्षेप कीजिए ॥ ४४ ॥

अथ समयोल्लङ्घनाद् बिभेषि तदपि न किञ्चिदित्याह—

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ४५

नेति । परेषु शत्रुषु । निकृतिः परं प्रधानं येषु तेषु । तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयस्य त्रयोदशसंवत्सरान्वने वत्स्यामीत्येवरूपा संवित् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । तस्य परिरक्षणं प्रतीक्षणं न क्षमं न युक्तम् । 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः । हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपटं यथा तथा । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । सन्धिदूषणानि विदधति केनचिद् व्याजेन दोषमारोप्य सन्धिं दूषयन्ति । विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषो सर्वथा

चरणौ राजशिरःस्रजां नमद्भूपालमौलिस्रजां रजः परागोऽभ्यषत्, तौ ते चरणौ मृग-द्विजैश्च तपस्विभिरालूनशिखेषु छिन्नाग्रेषु बर्हिषां कुशानाम्। 'बर्हिः कुशहुताशयोः' इति विश्वः। वनेषु निषीदतस्तिष्ठतः ॥ ४० ॥

जो ( महाराज के ) चरण चरण रज जटित सिंहासन पर विराजित मान करते थे और अभिवादन के लिये झुकने वाले राजाओं की मौलिमालाओं के पुष्परज से रंजित होते थे आज दिन वही चरण हरिणों और ब्राह्मणों के द्वारा छिन्न कुशों पर विश्राम करते हैं। यह कम की बात नहीं है क्या ? ॥ ४० ॥

ननु सर्वमप्येतत्सावधानत्वादापदि का परिदेवनेत्याह—

> द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
> परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥

द्विषदिति। यद्यतः कारणादियं दशाऽवस्था। दशा वर्त्तिकावस्थायाम् इति विश्वः। द्विषन्तो निमित्तं यस्याः सा। द्विषोऽमित्रे इति शतृप्रत्ययः। ततो मे मनः समूलं सकारणमुन्मूलयतीवोत्पाटयतीव। इयदिदं त्वयाऽन्य दुःखमित्याह—परैरिति। परैः शत्रुभिरपर्यासिताऽपर्यवसिता वीर्यसम्पदो येषां तेषां मानिनां मानवतामिषु सतां न स्वाप दिति भावः ॥ ४१ ॥

आप की यह वर्तमान दशा शत्रु के कारण हुई है इसी लिये मेरे मन हृदय में वेदना की प्रतीति होती है। जिन मानियों का जिस के बल और पराक्रम को शत्रु तिरस्कार नहीं कर सकता पराभव भी उत्सव ही होता है अर्थात् पराभव सहा है और [मानहानि नहीं]। ॥ ४१ ॥

> विहाय शान्तिं नृप ! धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम् ।
> व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥ ४२ ॥

विहायेति। हे नृप ! शान्तिं विहाय क्षमासिद्धं धाम तेजो विद्विषां वधाय पुनः सन्धेहि अङ्गीकुरु प्रसीद। प्रार्थनायां लोट्। ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्यत आह—व्रजन्तीति। निःस्पृहा मुनयः शत्रूनवधूय निरस्य शमेन कोपवर्जनेन सिद्धिं व्रजन्ति। भूभृतस्तु न। कैवल्यकामस्याराधनार्थं न क्षत्रियस्येत्यभिप्रायः ॥ ४२ ॥

महाराज ! क्षमा को दूर भगाकर रिपुओं का दमन करने के लिये फिर उस प्रचण्ड प्रताप का आश्रय लीजिये और प्रसन्नता को त्याग दीजिये। स्पृहा रहित महर्षि लोग काम क्रोधादि शत्रुओं का दमन करने ही सिद्धि प्राप्त करते हैं किन्तु राजा नहीं ॥ ४२ ॥

> पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
> भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त ! हता मनस्विता ॥ ४३ ॥

इति । किं च धामवता तेजस्विनाम् । परनिकारासहिष्णूनामित्यर्थः । पुरः सरन्तीति पुरःसरा अग्रेसराः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । यशोधना भवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषमधिकुर्वते चेत्तर्हि हन्त इति खेदे । मनस्विताऽभिमानिता निराश्रया सती हता । तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्याप्रकृतेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति 'प्रसहनं परिभवः' इति काशिका, तथाऽप्यस्याः कर्त्रभिप्रायक्रियाविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः—' इत्यात्मनेपदं प्रसिद्धम् ॥ ४३ ॥

आप-जैसे कीर्तिसर्वस्व तेजस्वियों के अधिनायक, यदि इस प्रकार के असह्य पराभव को प्राप्त होकर सन्तोष कर जाते हैं तो मनस्विता निराश्रय हो कर इस दुनिया से चल बसेगी ॥ ४३ ॥

> अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
> विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥४४॥

अथेति । अथ पक्षान्तरे निरस्तविक्रमः सन् । चिराय चिरकालेऽपि क्षमा शान्तिमेव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सुखस्य साधनं पर्येष्यवगच्छसि तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धरः । पचाद्यच् । जटानां धरो जटाधरः सन्निह वने पावकं जुहुधि । पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनुषेत्यर्थः । 'हुझल्भ्यो हेर्धिः' ॥ ४४ ॥

यदि शौर्य का परित्याग कर एक क्षमा को चिरकाल सुख की सामग्री मानना अभीष्ट हो तो राजाओं के चिह्न स्वरूप धनुः को फेंक दीजिये और जटा बढ़ाकर इसी जगह ( द्वैतवन में ) अग्नि देव में आहुति प्रक्षेप कीजिए ॥ ४४ ॥

अथ समयोल्लङ्घनाद् बिभेषि तदपि न किञ्चिदित्याह—

> न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
> अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ४५

नेति । परेषु शत्रुषु । निकृतिः परं प्रधानं येषु तेषु । तथोक्तेष्वपकारपरेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयस्यायोदशसंवत्सरान्ते वने वत्स्यामीत्येवरूपा संवित् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । तस्य परिरक्षणं प्रतीक्षणं न क्षमं न युक्तम् । 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः । हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशाः अरिषु विषये सोपधि सकपटं यथा तथा । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । सन्धिदूषणानि विदधति केनचिद् व्याजेन दोषमारोप्य सन्धिं दूषयन्ति । विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा

तज्जयाभ्युपायकोत्कर्षकथनं च चिनोति नः" ॥ इति । अथाय समुद्र — "नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजस्तस्योत्कर्षकृते त्ववर्ण्यततरा दिव्य किरात पुनः । शृङ्गारादिरसोऽङ्गमत्र विजयी वीर प्रधानो रस शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभ फलम् ॥ इति ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः समाप्तः ॥ १ ॥

---

सूर्य भगवान् जिस प्रकार भाग्य और समय के हेर फेर से आतप के विनष्ट होने से निष्प्रभ तथा घोप रहित होकर सायङ्काल को विपत्ति के सदृश ( अपार ) समुद्र में अस्त हो जाते हैं और पुनः दिन के आदिम भाग में अनुरूप अन्धकार को विनष्ट कर उदय होते हैं। उनकी किरणें पूर्ववत् उनका आलिङ्गन करने लग जाती हैं उसी प्रकार इस समय आप भी भाग्य और समय के कुचक्र में पड़कर प्रताप के नष्ट होने से अप्रसन्न हो गये हैं। आप अकिञ्चन ( निर्धन ) हो गये हैं। इस समय आप विपत्ति के सागर में गोते खा रहे हैं। अन्धकार के सदृश शत्रुओं का नाश कर अपने भाग्योदय के प्रथम भाग में वर्तमान आप का राज्य श्री पुनः स्वागत करेगी ॥ ४६ ॥

इस प्रकार 'प्रकाश' व्याख्या में प्रथम सर्ग समाप्त हुआ ॥ १ ॥

---

## द्वितीयः सर्गः

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥

विहितामिति । अथ वृकोदरो भीमः प्रियया द्रौपद्या । प्रियाग्रहणमस्या हितोपदेशतात्पर्यसूचनार्थम् । विहिताम्, अभिहितामित्यर्थः । विपूर्वस्य दधातेः क्रियासामान्यवाचिनो योग्यविशेषपर्यवसानात् । मनःप्रियामभिमतार्थयोगान्मनोहरां, विशेषणद्वयेनापि गिरो ग्राह्यत्वमुक्तं, गिरं गरीयसीं सारवत्तरां निश्चित्य नृपं धर्मराजमुपपत्तिमद् युक्तियुक्तमूर्जिताश्रयमुदारार्थं वचनमूचे उक्तवान् । कर्तरि लिट् । ब्रुवो वचिरादेशः । 'ब्रुविशासि—' इत्यादिना द्विकर्मकत्वम् । 'अकथितं च' इति नृपस्य कर्मत्वम् ॥ १ ॥

तदनन्तर भीम ने प्रियतमा द्रौपदी के द्वारा कहे वचन को हितोपदेशक तथा सार गर्भित मानकर युधिष्ठिर के समक्ष युक्तियुक्त तथा उदाराभिप्राय पूर्ण वचनों में समर्थन करते हुए कहा ॥ १ ॥

शत्रुओं के द्वारा आप के इस अवस्था को प्राप्त होने पर ( आपका ) पुरुषार्थ, जिसकी प्रशंसा देवता लोग मुक्तकण्ठ से करते हैं, विफल हो रहा है, इससे बढ़कर कष्ट और क्या हो सकता है ? ॥ ७ ॥

अथोपेक्षाकालत्वाद्विषमुपेक्ष्यत्वाशङ्क्य नायमुपेक्षाकाल इति वक्तुं तदेव तावच्छ्लोकद्वयेन विविनक्ति—

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥ ८ ॥

द्विषतामिति । भूतिमुदयमिच्छता । शोभना मेधा यस्य तेन सुमेधसा सुधिया । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्प्रत्ययः । गुरुर्महानप्यस्वन्ततरोऽत्यन्तदुरन्तः । क्षयोन्मुख इत्यर्थः । द्विषतामुदयो वृद्धिः । सुखेन मृष्यत इति सुमर्षणः सुसहः । उपेक्ष्य इत्यर्थः । 'स्वन्ततरस्येव सुमर्षण इति भावः । 'भाषायां शासि—' इत्यादिना खलर्थे युच्प्रत्ययः । महानपि फलसम्पत्प्रवणः फलसम्पदुन्मुखः । "प्रनिरन्तर—" इत्यादिना णत्वम् । परिक्षयो न सुमर्षणः, नोपेक्ष्य इत्यर्थः । अन्यथा तूपेक्ष्य इति भावः । अभ्युदय एव प्रतीकार्यो न च क्षय इत्येवोपेक्ष्य । किन्तु स्वन्ततरास्वन्ततराभ्यामुभावपि प्रतीकार्यावुपेक्ष्यौ च भवत इत्यर्थः ॥ ८ ॥

ऐश्वर्य्य की कामना करने वाले मेधावी ( बुद्धिमान् ) पुरुष शत्रु के महान् अभ्युदय की, जो क्रमशः अवनति को प्राप्त होने वाला है, उपेक्षा कर देते हैं, किन्तु यदि वह ( शत्रु ) महान् अभ्युदय की तरफ अग्रसर होता हो और वर्तमान परिस्थिति में भले ही अवनति में पड़ा हो तो कदापि उपेक्ष्य नहीं ॥ ८ ॥

अथोभयोरपि क्षये एकतरस्योदयस्योपेक्षितुमशक्यतां गुणवत्परिचयपूर्वकं प्रति-माह—

अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥

अचिरेणेति । कृतमनेनेति कृती । कुशल इत्यर्थः । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । परस्य शत्रोः क्षययुक्तिं क्षययोगमचिरेणाशुभाविनीं भूयसीं दुरन्तां च, तथाऽऽत्मनः क्षययुक्तिं विपरीतां चिरभाविनीमल्पीयसीं च विगणय्य विचार्य । "ल्यपि लघुपूर्वात्" इत्ययादेशः । उपेक्षते । अन्यथोक्तवैपरीत्ये । परस्य क्षययुक्तावल्पीयस्यां, स्वस्य भूयस्यां च सत्यामित्यर्थः । तत्र तस्याः क्षययुक्तेः प्रतिकारमचिरेणाशु कुरुते । एवं सति यदा शत्रोरभ्युदयः स्वस्य चातिपरिक्षयो यथाऽस्माकं, तदा किं वक्तव्यम् । सद्यः प्रतिक्रियतेत्यर्थात्सिद्धमनुसन्धेयम् ॥ ९ ॥

चतुर व्यक्ति, शत्रु की विपत्ति प्रचुर परिणाम में आशुभाविनी और अपनी चिरकाल

ननु प्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यत इत्यत्राह—

प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १२ ॥

प्रभव इति । कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पद्, देशकालविभागो, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि । यथाऽऽह कामन्दकः—'सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते' ॥ इति । पञ्चानामङ्गानां विनिर्णयः पञ्चाङ्गविनिर्णयः । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः । नयो नीतिः । मन्त्र इति यावत् । कोशोऽर्थराशिः । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । दण्डश्चतुरङ्गसैन्यम् । 'दण्डोऽस्त्री लगुडे राज्ञां हिंसायां लगुडे यमे । यात्राऽऽज्ञायां सैन्यभेदे' इति वैजयन्ती । तयोः कोशदण्डयोः प्रभुशक्तेरित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । 'ऋदोरप्' । स नयो विधेयपदेषु कार्यवस्तुषु । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । दक्षतां क्षिप्रकारित्वम् । उत्साहमित्यर्थः । लोकः कृष्यादिप्रवृत्तो जनः । नियतिं दैवमिव । 'नियतिर्नियमे दैवे' इति विश्वः । अनुरुध्यते अनुसरति । रुधेर्दैवादिकात्कर्तरि लट् । मन्त्रस्यापि मूलमुत्साहस्तन्मूलत्वात् प्रभुशक्तेर्मूलमिति किमु वक्तव्यम् । अतः स एवाश्रयणीयः । यतो नयादिसम्पन्नस्यापि प्रभोरनुत्साहस्य न किञ्चित्सिद्ध्यतीति ॥ १२ ॥

कार्य सिद्धि के पांच अङ्ग हैं—( १ ) सहायक, ( २ ) कार्य साधन के उपाय, ( ३ ) देश-विभाग, ( ४ ) काल विभाग और ( ५ ) विपत्प्रतिकार । सिद्धि के पांचों अङ्गों का निर्णय करनेवाली, प्रभु शक्ति की उत्पादिका नीति कृषकों की दैवानुसरण की भाँति उत्साह की अपेक्षा करती है अर्थात् उत्साह के बिना कोई सिद्धि नहीं हो सकती ॥ १२ ॥

ननु सोत्साहस्यासहायस्य कथमर्थसिद्धिरित्यत्राह—

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥ १३ ॥

अभिमानवत इति । अभिमानवतो मानधनस्य प्रियमिष्टमुच्चैरुन्नतं पदं स्थानं राज्यादिकमारुरुक्षत आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्यात्मपौरुषं स्वपुरुषकार एव विनिपातनिवर्तनक्षममनर्थप्रतीकारसमर्थमालम्बनं सहकारि मतमिष्टम् । यथा कश्चन चित्रकूटमारोहन् किञ्चित्पतनप्रसङ्गेऽवलम्बकमनुच्चरहस्तादिकमालम्बनं गृह्णाति तद्वत् । किं पौरुषादन्ये सहायाः पुरुषाणामिति भावः ॥ १३ ॥

उन्नत पद पर आरोहण करने के लिये इच्छुक, मानशाली और मुख्य, आपत्ति निवारण

२ कि०

अथेति। अथावधिं कालं प्रतीक्ष्यसे चेत्। 'अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः। आविष्कृतजिह्मरुचिना प्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेन दुर्योधनेन नरेन्द्रसम्पदो राज्यसम्पदः। नरेन्द्रेति वा पदच्छेदः। चिरं त्रयोदशवर्षपर्यन्तमास्वाद्यानुभूय कथं सुत्यजाः। ज्ञातास्वादेन तेन पश्चादपि सुखेन युद्धक्लेशं विना न त्यक्ष्यन्ते पूर्वस्यावधिप्रतीक्षणं व्यर्थमित्यर्थः ॥ १६ ॥

यदि आप तेरह वर्ष की अवधि की प्रतीक्षा करते हैं तो ( आप स्वयं समझिये ) धृतराष्ट्रपुत्र दुर्योधन जो प्रत्यक्ष कपट का व्यवहार करता है वह अधिक काल पर्यन्त राजलक्ष्मी का उपभोग कर क्यों कर उससे पृथक् हो सकता है ॥ १६ ॥

अथवा यदा दैववशात्स्वयमेव सम्पदो दास्यति चेत्तथाऽपि तत्कथं रोचयेमहीत्याह—

द्विषता विहितं त्वयाऽथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ ! तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७ ॥

द्विषतेति। अथवा द्विषता विहितं पुनः प्रत्यर्पितमात्मनः पदं राज्यं त्वया लब्धा लप्स्यते यदि। कर्मणि लुट्। हे जननाथ ! तवानुजन्मनामनुजानामाविष्कृतपौरुषैः प्रकटितपराक्रमैर्भुजैः कृतमलम्। अस्मद्भुजैर्न किञ्चित्साध्यमित्यर्थः। राज्यदातृत्वमयोर्द्विषतामेव स्वात्मन्येऽस्मद्भुजवैफल्यात्। 'क्षत्रियस्य विजेतव्यम्' इति स्वबाहुबलार्जितमेव राज्यं प्राप्यमिति भावः। कृतमिति प्रतिषेधार्थमव्ययं चादिषु पठ्यते। 'कृतमिति निवारणनिषेधयोः' इति गणव्याख्याने। भुजैरिति गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया। उक्तं च न्यासोद्द्योते—'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्यापि तु गम्यमानाऽपि' इति ॥ १७ ॥

जननाथ ! यदि शत्रु पुनः राज्य लौटा दें और वह आप के करतल में हो जाय तो आप के सोदर्यों के पराक्रमशाली भुजायें फिर कब और कहाँ सफल होंगी ॥ १७ ॥

ननु साम्नैव कार्यसिद्धौ किं दण्डेन। यथाऽऽह मनुः—'साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन्न युद्धेन कदाचन' ॥ इति। तत्किमाग्रहेणे·त्याशङ्क्याह—

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः ।
लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १८ ॥

मदेति। मृगाधिपः सिंहो मदसिक्तमुखैः, मदवर्षिभिरित्यर्थः। स्वयं स्वेनैव हतैः करिभिर्वर्तयते वृत्तिं करोति। तैरेव जीवतीत्यर्थः। चौरादिकाद्वृतेर्लट्। भौवादिकस्य तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदनियमादिति। तथाहि—तेजसा प्रभावेण। 'तेजो बले प्रभावे च ज्योतिष्यग्नौ च रेतसि' इति वैजयन्ती। जगल्लघय

कलघूकुर्वन्महांस्तेजस्यन्यतोऽन्यस्मात्पुरुषाद् भूतिं वृद्धिं नेच्छति खलु । नहि तेजस्विनः परायत्तवृत्तित्वं युक्तम् । मनुवचन स्वतुल्यविषयमिति भाव । विशेषेण सचमा णसामान्यसमर्थनरूपोऽर्थान्तरन्यास ॥ १८ ॥

मृगेन्द्र ( सिंह ) अपने मारे [illegible] मदस्रावी दन्तियों ( हाथियों ) के द्वारा अपना आहार सम्पादन ( निर्वतन ) करता है उसी तरह महान् व्यक्ति संसार को अपने प्रताप से अभिभूत करता हुआ किसी अन्य की सहायता से अपने अभ्युदय की अभिलाषा नहीं करता १८

ननु मुख्याप्तिको कामः उपायान्तरैस्तु न तयेत्याशङ्क्याह—

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।

अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९ ॥

अभिमानेति । अभिमानधनस्य शरीरपर्यन्तमानाभिरक्षस्य । अत एव गत्वरैर नश्वरैरस्थिरै । 'गत्वरश्च' इति करपन्तो निपात । असुभि प्राणैः । करणै । असु इति भूम्नयसवः प्राणा' इत्यमर । स्थास्नु स्थिरम् । 'ग्लाजिस्थश्च ग्स्नु' इति ग्स्नुप्रत्ययः । यशश्चिचीषतश्चेतुं सङ्ग्रहीतुमिच्छत । चिनोते सन्नन्ताच्छतृप्रत्यय । अचिरभासो यस्या साऽचिरांशुर्विद्युत्तस्या विलास स्फुरण तद्वच्चञ्चला चणिकेत्यथः । लक्ष्मीः सम्पत् अनुषङ्गाद्भवत्यानुषङ्गिकमप्राधान्यशिष्टमप्य फलम् । मान धनस्य यश एव मुख्य फलमस्तुस्यमस्तु लक्ष्मीरिति मानिनामिदमेव रक्षणमिति त्यथः । अत्रास्थिरप्राणव्ययेन स्थिरयशसः परिक्रयाभिधानात्परिवृत्तार्थिकविनिमयापरपर्यायपरिवृत्त्यलङ्कारः । तदुक्त काव्यप्रकाशे— परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमै इति ॥ १९ ॥

मानि कुल और अभिमान की रक्षा को अपना सर्वस्व मानने वाले पुरुष अस्थिर प्राणों के द्वारा स्थायी यश के एकत्रीकरण की इच्छा करते हैं कदाचित् उस के साथ २ विद्युत्प्रभा के परिस्फुरण सदृश चपल लक्ष्मी भी प्राप्त हो जाय तो वह उन के लिये आनुषङ्गिक फल है अर्थात् उन का लक्ष्य तो यश है यदि लक्ष्मी भी मिल जाती है तो क्या कहना ॥ १९ ॥

मन्यत्यस्य मानस्य हेतोः कथ प्राणत्यागः क्रियते कस्तु यतः— जीवन्नरो भद्रशतानि पश्येद् इत्याशङ्क्याह—

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।

अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥

ज्वलितमिति । जनो भस्मनां चय पुञ्जमास्कन्दति पादादिनाऽऽक्रामति । अदाहकत्वादिति भाव । ज्वलन्तम् । कर्तरि क्तः । अतिवृत्ति— इत्यादिसूत्रे चकाराद्दुसंज्ञाभावत्वम् । हिरण्यं रेतो यस्य त हिरण्यरेतसमग्निं नास्कन्दति । दाहकत्वादिति भावः । अतो हेतोर्मानिनोऽभिभूतिभयात्पराभवभयेन तेजस्त्यागे परिभवो भविष्यतीति भयात्

सुनेव सुखमविक्लबमुल्लङ्घन्ति । मानहानिकृताज्जीवनात्स्वतेजसा मरणमेव वरमित्यर्थः । पूर्वश्लोकवदर्थान्तरन्यासः ॥ २० ॥

लोग राख के ढेर को पदाक्रान्त करते हैं, परन्तु प्रज्वलित अग्नि को पदाक्रान्त नहीं करते । मानी मानहानि की आशङ्का से सुखपूर्वक प्राण विसर्जित कर देते हैं, पर अपने मान मर्य्यादा तथा तेज को धक्का नहीं लगने देते ॥ २० ॥

अथवा किमत्र प्रयोजनचिन्तया, किन्तु तेजस्विनामयं स्वभाव एव यद्विजिगीषुत्व-मित्याशयेनाह—

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ २१ ॥

किमिति । मृगाधिपः सिंहः किं [illegible] प्रयोजनमपेक्ष्य ध्वनतो गर्जतः । धरन्तीति धराः । पचाद्यच् । पयसां धरास्तान्पयोधरान्मेघान्प्रार्थयतेऽभियाति, 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः । यद्वा—अवस्कन्दतीत्यर्थः । [illegible] अर्थयते । 'मा क्वचित् याच्ञाऽवरोधयोः' इत्यभिधानरत्नमालायाम् । मा इति तृतीयान्तस्य प्रशब्दस्य योगविभागात् 'आतो धातोः' इत्याल्लोपः । तथा हि—महीयसो महत्तरस्य सा प्रकृतिः खलु यया प्रकृत्याऽन्यसमुन्नतिं न सहते । अतः परमार्थमेव पुरुषार्थं इत्यर्थः । पूर्ववदलङ्कारः ॥ २१ ॥

सिंह किस फल की आशा से गरजते मेघों को देख ऊपर को उछलता है, बड़े लोगों का वह स्वभाव है जिसके कारण किसी के अभ्युदय को वे सहन नहीं कर सकते ॥ २१ ॥

सम्प्रत्युक्तप्रयोजनं निगमयति—उक्तार्थोपसंहरणं निगमनमुच्यते—

कुरु तन्मतिमेव विक्रमे नृप ! निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२ ॥

कुर्विति । हे नृप ! तत्तस्मादुक्तरीत्या पराक्रमोत्साहयोर्हेतुत्वाद्धेतोः, 'पत्तयस्तु हेतौ' इत्यमरः । प्रमादजं तमो मोहं निर्धूय निरस्य विक्रमे पौरुष एव मतिं कुरु, न तूपायान्तरमित्यर्थः । न च विक्रमवैफल्यशङ्का कार्येत्याह—ध्रुवमिति । विद्विषां विपत्तयस्त्वदनुत्साहहतास्त्वदनुत्साहेनाध्यवसायेन हताः प्रतिबद्धाः । अन्यथा प्रागेव विपद्येरन्निति भावः । इत्येतद् ध्रुवं निश्चितमवेहि विद्धि । 'ध्रुवं नित्ये निश्चिते च' इति शाश्वतः ॥ २२ ॥

उत्साह और पराक्रम ही प्रधान है, अतः हे महाराज, असावधानता के अन्धकार को मार भगाइये, पराक्रमावलम्बी होने का विचार कीजिये । इस बात को अटल मानिये कि शत्रुओं की विपत्ति केवल आप के अनुत्साह के कारण दूर है, अगर आप उत्साही हो जाँय तो शत्रु शीघ्र ही विपद्ग्रस्त हो जाँय ॥ २२ ॥

परीतमानसः कोपाक्रान्तचित्तः। इदं विशेषणद्वयं द्विरदेऽपि योज्यम्। मरुतः सुतं भीमं महीपतिर्युधिष्ठिरो दुष्टं द्विरदमिव। एतेन भीमस्य शौर्यमेव, न बुद्धिरस्तीति गम्यते। उपसान्त्वयितुमनुनेतुमुपचक्रमे प्रवृत्तः 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्। राजा तावदुपकारविशेषापेक्षया कथञ्चिदवश्यो वशं याने शनैर्द्विरदवद्वशीकरणीय, न [illegible] त्याज्य इति भावः॥ २५॥

भूपति (युधिष्ठिर), उपर्युक्त प्रकार के विकारोत्पादनकर्ता क्रोध से आक्रान्तचित्त, वायुनन्दन भीमसेन को, दुष्ट मदवाले दन्ती (हाथी) की तरह वश में करने का प्रयत्न करने लगे॥ २५॥

प्रथमं तावत्स्तुत्यादिभिः प्रसादयति—

> अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे।
> विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते॥ २६॥

अपवर्जितेति। विप्लवः प्रमाणबाधः। अन्यत्र वाह्यमलसङ्करः। सोऽपवर्जितो यस्य तस्मिन्नपवर्जितविप्लवे। शुचौ। सौशब्द्यलोकशुद्धिरिव शुचित्वम्। तद्वतीत्यर्थः। अत एव हृदयग्राहिणि मनोरमे मङ्गलास्पदे। एकत्र हितार्थप्रतिपादकत्वादन्यत्र मङ्गलवस्तुत्वाच्च श्रेयस्करे। 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम्। गुरुमग्निं तथा सूर्यं प्रातः पश्येत्सदा बुधः'॥ इति पुराणवचनात्। तव गिरां विस्तरे वाक्प्रपञ्चे। 'प्रथने वावशब्दे' इति घञ्प्रतिषेधाद् 'ऋदोरप्' इत्यप्। अत एव 'विस्तारो विग्रहो व्यासः स तु शब्दस्य विस्तरः' इत्यमरः। मतिस्त्वद्बुद्धिरादर्शे दर्पण इव। 'दर्पणे मुकुरादर्शौ' इत्यमरः। विमला विशदाऽभिदृश्यते। वाग्वैशद्यादेव मतिवैशद्यमनुमीयते। तत्पूर्वकत्वात्तस्येत्यर्थः॥ २६॥

महाराज युधिष्ठिर ने कहा—"जिस तरह ऊपरी मलिनता से मुक्त (निर्मल), लोध्र आदि सामग्रियों से सुनिर्मित, चित्ताकर्षक और मङ्गलकारी दर्पण में रूप का प्रतिबिम्ब स्वच्छ दृष्टिगोचर होता है, उसी तरह प्रमाद मुक्त, सुन्दर शब्द योजना युक्त प्रिय और हितकर वाक्प्रपञ्च में तुम्हारी सुबुद्धि स्पष्ट रूप से प्रतिबिम्बित होती है॥ २६॥

अथ युग्मेनाह—

> स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
> रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥ २७॥

स्फुटतेति। पदैः सुप्तिङन्तशब्दैः स्फुटता विशदार्थता नापाकृता न त्यक्ता। अर्थगौरवमर्थभूयस्त्वं च न न स्वीकृतम्। स्वीकृतमेवेत्यर्थः। वैकल्यप्रसक्तार्थगौरवाभावनिषेधार्थं नञ्द्वयम्। 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः। गिरां पदानामवान्तरवाक्यानां च पृथगर्थता भिन्नार्थता। अपुनरुक्तार्थतेति यावत्। रचिता कृता। तथा

अवितृप्ततयेति । तथाऽपि त्वया सम्यङ्निर्णीतेऽपि मे हृदयमवितृप्ततयाऽसन्तुष्टतया । अद्यापि संशयगतत्वेनेत्यर्थः । निर्णयमेव धावत्यनुसरति । अपेक्षत इति यावत् । अद्यापि निर्णयस्यानुदयादिति भावः । निर्णयानुदये हेतुमाह—अथेति । विधेयेषु सन्धिविग्रहादिकर्त्तव्यार्थेषु या । विशेषसम्पदोऽवान्तरभेदभूमानस्ता सुप्रमदक्लेशेनाव-सायितुम् । पुरुषाणामत्यानुकूल्येन स्वस्वरूपं स्वयमेव शीघ्रं प्रत्याययितुमित्यर्थः । स्यतेर्ण्यन्तात्क्षणिकसंकर्षकात्तुमुन् । षोरणादिसूत्रस्याय विषय । क्षमन्त इति क्षमा । पचाद्यच् । शक्ता न भवन्ति । 'क्षम शक्ते हिते त्रिषु' इत्यमरः । विधेयमात्रस्य सुग-मत्वेऽपि तद्विशेषाणां सौक्ष्म्याद्बाहुल्याच्च दुर्ज्ञेयत्वादद्यापि निर्णयाकाङ्क्षेति तात्पर्या-र्थः । अत्र निर्णयधावन प्रत्युत्तरवाक्यार्थस्य हेतुत्वाभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः । तदुक्तं—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥ २९ ॥

यद्यपि उचित प्रतिपादन किया गया है तथापि मेरे मन को सन्तोष न हुआ, अतः वह कर्तव्यानुष्ठान के निर्णय की ओर अग्रसर हो रहा है। विशेष सम्पत्तियाँ सन्धि, विग्रहादि कर्तव्यानुष्ठान के विषय में अपने स्वरूप को सरलतापूर्वक प्रकट करने में असमर्थ होती हैं २९

वस्तुविशेषावधारणमन्तरेणैव प्रवृत्तिरित्याशङ्क्याह—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥३०॥

सहसेति । क्रियत इति क्रिया कार्यं सहसा । अविमृश्येत्यर्थः । 'सहसेत्याक-स्मिकाविमर्शयोः' इति गणव्याख्याने स्वरादिपाठादव्ययम् । न विदधीत न कुर्वीत । कुतः । अविवेकोऽविमृश्यकारित्वं परमात्यन्तमापदां पदं स्थानम् । कारणमित्यर्थः । व्यतिरेकेणोक्तमर्थमन्वयेनाह—वृणत इति । गुणलुब्धा गुणगृध्नव इति स्वयंवरवदुक्तिः । सम्पदः श्रियः । विमृश्य करोतीति विमृश्यकारी । 'उपपदमतिङ्' इति समासः । तं स्वयमेव वृणते भजन्ते हि । 'वृङ् सम्भक्तौ' इति धातुः । तस्माद्विमृश्यैव प्रवर्त्तितव्यमित्यर्थः । अत्र सहसाविधाननिषेधलक्षणविमृश्यकारित्वरूपकार्य दु-रूपव्यतिरेककार्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यासः । द्वितीयार्धेन च स एव साधर्म्ये-णेति ज्ञेयम् ॥ ३० ॥

एकाएक ( विवेचना किये विना ) किसी कार्य्य का आरम्भ नहीं करना चाहिये। सम्यक् विचार न करना परम आपत्ति का उत्पादक होता है। गुण के ऊपर अपने आप को समर्पण करनेवाली सम्पत्तियाँ विचारवान् पुरुष को स्वयं मनोनीत करती हैं अर्थात् जो कुछ किया जाय उसके आगे पीछे की सब बातों का विचार कर लेना चाहिये ॥ ३० ॥

क्रोधोपशान्ति का भूषण होता है और नीतिसम्पादितविवेकपूर्विका सिद्धि पराक्रम का आभरण होती है। तात्पर्य्य यह है कि विवेकी पुरुष की कार्य्यसिद्धि अवश्यम्भाविनी है और साहसियों की फल सिद्धि सन्देह रूप झूले पर झूलती रहती है॥ ३२॥

'विमृश्य कुर्या'दिति स्थितम्। तत्र विमर्शोपायः कः ? इत्युक्ते शास्त्रमेवेत्याह—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ ३३॥

मतीति। मतिभेदः कार्यविप्रतिपत्तिः। मतिभेदस्तम इवेत्युपमितसमासः। दीप इवेत्युपमाऽनुसारात्। तेन तिरोहिते आच्छन्नेऽत एव गहने दुरवगाहे कृत्यविधौ कार्यानुष्ठाने विवेकिनां सुकृतः सदभ्यस्तोऽत एव परिशुद्धो निश्चितोऽन्यत्र सुविहितः प्रमादादिदोषरहितश्च। आगमः शास्त्रम्। 'आगमः शास्त्र आयतौ' इति विश्वः। दीप इवार्थदर्शनं कार्यज्ञानं वस्तुप्रतिभासनं च कुरुते॥ ३३॥

जिस प्रकार वातादिक विघ्नों से सुरक्षित और सुव्यवस्थित प्रदीप अन्धकारावृत वस्तु के प्रदर्शन कराने में समर्थ होता है उसी तरह जब विवेकी पुरुष कर्तव्यानुष्ठान के समय सन्देह और विकल्प में पड़ जाता है, उस समय सम्यक् अभ्यस्त और परिशुद्ध शास्त्रज्ञान उसके कर्तव्यपथ का प्रदर्शक होता है॥ ३३॥

एवं विमृश्य कुर्वतो दैवादनर्थागमोऽपि न कश्चिदपराध इत्याह—

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः॥ ३४॥

स्पृहणीयेति। स्पृहणीयगुणैर्लोकश्लाघ्यगुणैर्महात्मभिः सज्जनैश्चरितेऽनुष्ठिते वर्त्मन्याचारे मनो यच्छतां नियच्छताम्। सन्मार्गेण व्यवहरतामित्यर्थः। विधिहेतुर्दैवनिमित्तकः। 'विधिर्विधाने दैवे च' इत्यमरः। अत एवागसामपराधानामहेतुर्विनिपातो दैविकानर्थोऽपि। 'विनिपातोऽवपाते स्याद् दैवाद्व्यसनेऽपि च' इति विश्वः। समुन्नतेरभिवृद्धेः समस्तुल्यः। दैविकेषु पुरुषस्यानुपालम्भ्यत्वादिति भावः। यथाऽऽह कामन्दकः—'यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम्। पुरुषस्तत्रानुपालभ्यो दैवान्तरितपौरुषः' इति॥ ३४॥

प्रशस्त गुणवाले महापुरुषों के द्वारा आचरित पथ का अवलम्बन कर्ता व्यक्ति की आपत्ति (अवनति) किसी भी अपराधों का कारण नहीं होती और अदृष्ट ही उसका कारण होता है, तथा वह भी उन्नति के समान ही है॥ ३४॥

शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतिम्।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः॥ ३५॥

अत्र सर्वकारणत्वात्त्रयपथस्य कलात्रयकारित्वमस्त्येव । तमसस्तु तत्कालविजृम्भणात्तथा व्यपदेशः ॥ ३७ ॥

शूर होता हुआ भी जो पुरुष क्रोध से उत्पन्न होने वाले मोह की आक्रान्ति का अवरोध नहीं करता, वह कृष्णपक्षीय चन्द्रमा की कलाओं की भाँति अपनी प्रभु, मन्त्र, और उत्साह इन तीनों शक्तियों से हाथ धो बैठता है ॥ ३७ ॥

विजिगीषुरस्य कुर्वत क्रियाप्रकारमाह—

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥ ३८ ॥

समेति । यः समा आसिमृदुर्नातितिग्मा वृत्तिर्यस्य स समवृत्तिः सन् समये समवसरे मार्दवं मृदुप्रकृतित्वमुपैति तिग्मतां तीक्ष्णवृत्तित्वं च तनोति । स मेदिनीपतिर्विवस्वानिव, ओजसा तेजसा लोकमधितिष्ठत्याक्रामति । सूर्योऽपि, ऋतुभेदेन समवृत्तिरित्यादि योज्यम् ॥ ३८ ॥

वह भूमिपाल, जो न तो अत्यन्त सरलता और न अत्यन्त क्रूरता का अवलम्बन करता है, यथासमय और यथावसर कोमलता और क्रूरता दोनों का व्यवहार करता रहता है, वह सूर्य के समान अपने प्रताप से समग्र संसार पर आधिपत्य स्थिर रखता है ॥ ३८ ॥

कस्याप्यकारणेऽभिहमाह—

क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः ॥ ३९ ॥

क्वेति । श्रियां सम्पदां चिराय बहुकालं परिग्रहः स्वायत्तीकरणं क्व ? इन्द्रियाणि वाजिन इवेत्युपमितसमासः । दुष्टानामसमार्गधाविनामिन्द्रियवाजिनां वश्यो वशङ्गतस्तस्य भावस्तत्ता क्व ? नोभयमेकत्र तिष्ठतीत्यर्थः । कुतः । हि यस्माच्छरदभ्रवच्चलाश्चञ्चलाः । किञ्च बहुच्छलाः बहुस्खलाः । बहुरन्ध्रा इति यावत् । 'छलं तु स्खलिते व्याजे' इति विश्वः । श्रियः सम्पदः । चलेन्द्रियैरजितेन्द्रियैरसुरक्षा रक्षितुमशक्याः । कथञ्चित्प्राप्ता अपि श्रियो नाविनीतेषु तिष्ठन्तीत्यर्थः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३९ ॥

चिर काल तक सम्पत्तियों का वशीकरण कहाँ और उन्मार्गगामी घोड़ों की भाँति दुष्ट इन्द्रियों को अपने वश में करना कहाँ ? (क्यों कि) सम्पत्तियाँ शरत्कालीन मेघ की तरह चञ्चल और अनेक छिद्रों से पूर्ण हैं। चञ्चलेन्द्रिय पुरुषों के द्वारा उनकी रक्षा होना सामर्थ्य के बाहर है ॥ ३९ ॥

अतिपातितेति । अतिपातितान्यतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि यया सा तथोक्ता । तापयतीति तापनी । कर्तरि ल्युट् । टित्वान्ङीप् । स्वस्य यच्छरीरमिन्द्रियवर्गश्च तयोस्तापन्यक्षमा क्रोधो भवन्तं जनवत्पृथग्जनमिव । 'तेन तुल्यम्—' इति वतिप्रत्ययः । तेनेवार्थो लभ्यते । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययम् । नयसिद्धेर्नयसाध्यफलादपनेतुं पृथक्कर्तुं नार्हति । असमयकोपस्य तापमसन्तापातिरिक्तं फलं नास्तीत्यर्थः ॥ ४२ ॥

समय और साहाय्य की अतिक्रमकारिणी और अपने ही इन्द्रियवर्गों की कष्टदायिनी, असहिष्णुता सामान्य व्यक्ति की भाँति तुम्हें न्याय के साध्य फल की सिद्धि से दूर करने में समर्थ नहीं हो सकती ॥ ४२ ॥

'कुरु क्रोधं' इत्युक्तम् । अथ क्षमाया गुणानाह—

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ४३ ॥

उपकारकमिति । आयतेरुत्तरकालस्य भृशमत्यन्तमुपकारकं स्थिरफलहेतुरित्यर्थः । भूरिणः प्रभूतस्य कर्मफलस्य । प्रसूयतेऽनेनेति प्रसवः कारणम् । अपायि न भवतीत्यनपायि स्वयमविनश्वरमेव द्विषां निबर्हणं विनाशकमेवङ्गुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति । 'क्षान्तिः क्षमा तितिक्षा च' इत्यमरः । 'तिज निशाने' इति धातोः 'गुप्तिज्किद्भ्यः सन्' इति क्षमार्थे सन्प्रत्ययः । तितिक्षासममित्यनुक्तोपमेया समासगा आर्थी लुप्तोपमा, भृशमायत्यनपायिशब्दैः साधनान्तरवैलक्षण्याद् व्यतिरेकश्च व्यज्यते । भेदप्राधान्य उपमानादुपमेयस्याधिक्ये विपर्यये च व्यतिरेकः ॥ ४३ ॥

भविष्य के लिये अत्यन्त उपकारिका और प्रचुर परिमाण में कर्मफल की जनयित्री शान्ति के सदृश स्वयं अविनाशी और शत्रुओं का विनाशकारी कोई अन्य साधन नहीं है ॥ ४३ ॥

ननु तितिक्षया कालक्षेपे सुयोधनः सर्वान्राज्ञो वशीकुर्यादित्यत आह—

प्रणतिप्रवणान्विहाय नः सहजस्नेहनिबद्धचेतसः ।
प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः ॥ ४४ ॥

प्रणतीति । सहजस्नेहेनाकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मासु गाढं बद्धचित्ताः । सुयोधने तु न तथेति भावः । किं च । मानभृतामहङ्कारिणां प्रथमेऽग्रेसराः । सुयोधनस्तु ततोऽपीति भावः । वृष्णयो यादवाः प्रणतिप्रवणान्प्रणामपरान् । सुयोधनस्तु न तथेति भावः । नोऽस्मान्विहाय सुयोधनं सदा न प्रणमन्ति न नमन्ति नानुसरन्ति । किन्तु कार्यकाले स्वयमस्मानेवेत्यर्थः । सति यादवविग्रहे न किञ्चिद्दुस्साधं भवेदिति भावः । अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

उपजापेति। मदोद्धतः स दुर्योधनो नृपतीनन्यान्नृपान्विकर्षयन्मदादवमानयन्। सहन्त इति सहाः पचाद्यच्। उपजापस्य सहान्भेद्यान्योग्यान्। 'समौ भेदोपजापौ' इत्यमरः। विधाता विधास्यति। दधातेर्लुट्। अवमानितो जनः सुभेद्य इति भावः। न च ते सहिष्यन्त इत्याह—अल्पः प्राकृतोऽप्यन्यक्रियामपमानं न सहते। लोकाधिकधाम लोकोत्तरप्रतापं राजकं राज्ञां समूहः। 'गोत्रोक्षोष्ट्र—' इत्यादिना वुञ्प्रत्ययः। किमु। न सहत इति किं वक्तव्यमित्यर्थः। तथा सति कृत्स्नमेव राजमण्डलमस्मानेवावलम्बिष्यत इति भावः ॥ ४७ ॥

अहङ्कार से उद्दण्ड दुर्योधन राजाओं की अवमानना करके भेद योग्य बना देगा। एक साधारण व्यक्ति भी अपना तिरस्कार सहन करने में असमर्थ होता है तो जो लोकोत्तर प्रतापशाली राजन्यवर्ग है, उसकी कथा क्या कहना? अर्थात् वह अपमान कदापि नहीं सहन कर सकता॥

ननु 'लक्ष्मीनिवेशयोग्यामुपमेयशोभा'इत्युक्त्या तस्य मदसम्भावनाऽपि कथमित्याशङ्क्याह—

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥

असमापितेति। असमापितकृत्यसम्पदामकृतकृत्यानामतोऽभिमानशालिनामहङ्कारिणां विभूतयः सम्पद एव तावता स्वल्पेन विनयेन। कार्यवशादारोपितेनेति शेषः। हतवेगं प्रतिबद्धवेगं न तु स्वरूपतो हतं मदमुत्तम्भयितुं वर्धयितुं प्रभवन्ति। सर्वथा दुर्जनसम्पदो विकारकारिणीति भावः ॥ ४८ ॥

कार्य को अधूरा छोड़ने वाले अहङ्कारियों की सम्पत्तियाँ कार्यवश कृत्रिम विनम्रता से, न्यूनवेग होने वाले अभिमान की वृद्धि करने में सहकारिणी होती हैं अर्थात् वह स्वार्थ साधन के लिये थोड़ा नम्र बना रहता है और अहङ्कार पर अधिक समय तक आवरण डालने में असमर्थ रहता है, अन्त में उसका अहङ्कार अपना रूप धारण कर ही लेता है ४८

अथ मदस्यानर्थहेतुतां सूचयन्नाह—

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४९ ॥

मदेति। मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढता कार्यापरिज्ञानं नियमेनावश्यं न वियुङ्क्ते न विमुञ्चति। अतिमूढो नयान्नीतिमार्गादुदस्यते उत्क्षिप्यते। कर्मकर्तरि लट्। नयहीनाज्जनोऽपरज्यतेऽपरक्तो भवति। 'स्वरितञितः—' इत्यादिनाऽऽत्मनेपदम् ॥ ४९ ॥

अज्ञानता गर्व और अहङ्कार के कारण उद्दण्ड नरपति का कभी परित्याग नहीं करती। अत्यन्त अज्ञानी पुरुष नीतिपथ से भ्रष्ट हो जाता है। नीतिपथ से पराङ्मुख होने पर जनता भी उससे अलग हो जाती है॥ ४९॥

बुद्धिमान् को चाहिये कि दुर्विनीत शत्रु के अभ्युदय की उपेक्षा कर दे। अत ऐसे शत्रु किसी न किसी दोष से सुजय होते हैं, क्योंकि दुर्विनीत मनुष्यों की सम्पत्तियों का अवसान विपत्ति में होता है ॥ ५२ ॥

कथ दुर्विनीतस्य शत्रो सुजयत्वमित्याशङ्क्य भेदजर्जरितत्वादित्याह—

लघुवृत्तितया भिदा गत बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥ ५३ ॥

लघ्विति । लघुवृत्तितया स्वस्य दुर्वृत्तत्वतया बहिर्मित्रादिजनपदेष्वन्तरमात्यादिषु च भिदा भेद गतम् । 'षिद्भिदादिभ्योऽङ्' इत्यङ् । नृपस्य मण्डल राष्ट्रमनन्तर सन्निहितो विजिगीषुरापगारयो नदीवेग शिथिलमन्तर्भेदजर्जर कूलमिवाभिभूयाक्रम्य हरति ॥ ५३ ॥

जैसे अन्तर्भेद से जर्जरित तट को नदी का प्रवाह नष्ट कर देता है, वैसे ही शत्रु के दुर्व्यवहार से मित्रादि प्रजावर्ग और अन्तरङ्ग मन्त्रिवर्ग भेद को प्राप्त हो जाते हैं। ऐसी परिस्थिति में समीपवर्ती राजा उस पर आक्रमण कर विजयी बन जाता है ॥ ५३ ॥

अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ ५४ ॥

अन्विति । इतीत्थमाकुलमरिनिकारस्मरणात्क्षुभितमर्जुनाग्रज भीमसेन नयवर्त्म नीतिमार्गमनाकुलमसङ्कीर्णं यथा तथाऽनुशासतमुपदिशन्तम् । 'अभिव्याप्य चरः' इत्यन्यस्यात्मनेपदम् । त युधिष्ठिर पराशरात्मजो वेदव्यास स्वयमभिवाञ्छितोऽर्थ इव । साक्षान्मनोरथ इवेत्युत्प्रेक्षा । अभीयाय प्राप ॥ ५४ ॥

शत्रु से किये गये अपकारों का स्मरण कर विक्षोभ को प्राप्त अर्जुन के ज्येष्ठ भ्राता भीमसेन को इस तरह विवेचनापूर्वक नीति मार्ग का उपदेश करते युधिष्ठिर के पास, स्वयं अभिलषित मनोरथ सिद्धि के सदृश पराशरपुत्र श्रीवेदव्यासजी का आगमन हुआ ॥ ५४ ॥

अथ युग्मेनाह—

मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५ ॥
सहसोपगतः सविस्मयं तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसञ्चयः ॥ ५६ ॥

मधुरैरिति । मधुरैः शान्तैर्निरीक्षितैरवलोकनैः । नपुंसके भावे क्तः । न विद्यते वशः येषां तान्यवशानि प्रतिकूलानि । 'वशमायत्ततायां च' इति विश्वः ।

देव की ऋषियों के योग्य पूजा की। पुनः जिस तरह शम, शास्त्र को सुशोभित करता है, उसी तरह उन्होंने मुनि की आज्ञा से अपने आसन को सुशोभित किया॥५८॥

व्यक्तोदितस्मितमयूखविभासितोष्ठ-
स्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः।
तन्वन्तमिद्धमभितो गुरुमंशुजालं
लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्तेः॥५९॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये द्वितीयः सर्गः॥२॥

---

व्यक्तेति। व्यक्तोदितैः स्फुटोद्गतैः स्मितमयूखैर्विभासितावोष्ठौ यस्य स तथोक्तः। विकीर्णधाम्नो विस्तीर्णतेजसो मुनेरभिमुखं तिष्ठन् स नृपः। इद्धं दीप्तमंशुजालं तन्वन्तं गुरुं गीष्पतिम्। 'गुरुर्गीष्पतिपित्राद्यौ' इत्यमरः। 'अभितः परितः—' इत्यादिना द्वितीया। अभितोऽभिमुखम्। तिष्ठत इति शेषः। सकलस्य सम्पूर्णस्य शशाङ्का मूर्तिर्यस्य तस्येन्दोर्लक्ष्मीमुवाह वहति स्म। अत्रोपमेयस्य राज्ञ उपमानेन्दुधर्मेण लक्ष्म्या साक्षात्सम्बन्धासम्भवात्सदृशीं लक्ष्मीमिवेति प्रतिबिम्बकरणाक्षेपादसम्भवद्वस्तुसम्बन्धरूपार्थवृत्तिर्निदर्शनालङ्कारः। तदुक्तम्—'प्रतिबिम्बस्याकरणं सम्भवता यत्र वस्तुयोगेन। तत्साम्यमसम्भवता निदर्शना सा द्विधाऽभिमता' इति॥५९॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयमहाकाव्यव्याख्यायां घण्टा ख्यायां
द्वितीयः सर्गः समाप्तः॥२॥

---

मुनि का तेज सर्वत्र फैल रहा था। उनके समीप बैठे हुए युधिष्ठिर, जिनके अधर (होठ) मन्द हास के समय दन्तपंक्तियों से निःसृत परिस्फुरणकारी किरणपुञ्जों से उद्भासित हो रहे थे, चतुर्दिक् अपने प्रभापुञ्ज को बिखेरते हुए बृहस्पति के समीप समागत, सम्पूर्ण कला सम्पन्न शशलाञ्छन (चन्द्रमा) की शोभा को प्राप्त हुये॥५९॥

इस प्रकार 'प्रकाश' व्याख्या में द्वितीय सर्ग समाप्त हुआ॥२॥

---

# तृतीयः सर्गः ।

अथ त्रिभिर्मुनिं विशिंषंश्चतुर्भिः कलापकमाह । तदुक्तम्— द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥ इति ।

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १ ॥

तत इति । ततः उपवेशनानन्तरं धर्मात्मजो युधिष्ठिरः शारदचन्द्रकराभिरामैः आह्लादकैरित्यर्थः । उत्सर्पिभिरूर्ध्वं प्रसारिभिरंशुजालैः प्रांशुमुन्नतमिव स्थितमित्युत्प्रेक्षा । पुनरानीलरुचं कृष्णवर्णं पिशङ्गीः पिङ्गवर्णाः । गौरादित्वान्ङीष् । जटा बिभ्राणं धारयन्तमत एव तडित्वन्तं विद्युद्युक्तमम्बुवाहमिव स्थितमित्युत्प्रेक्षा ॥ १ ॥

पाण्डवों आसनासीन होने पर ( बैठ जाने पर ) शरद् ऋतु के चन्द्रमा की किरणों के समान मनोहर ऊर्ध्वप्रसरणशील तेज समूह से उन्नत (डील डौल में बड़े) मालूम पड़ते थे । उनके शरीर का रंग हल्का नीला था । उनके सिर पर पीली जटा थी । अतः वे बिजली से युक्त मेघ के समान दिखाई पड़ते थे ॥ १ ॥

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

प्रसादेति । पुनः समग्रां संपूर्णां प्रसादः सौम्यता तस्य लक्ष्मीं संपदं दधतम् । अत एव जनमतिगच्छतीति जनातिगेन लोकातिशायिना । 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । वपुःप्रकर्षेणाकारसंपदाऽसंस्तुतानामपरिचितानामपि । अभ्यासोऽपरिचितानामपीत्यर्थः । 'संस्तवः स्यात्परिचयः' इत्यमरः । चेतःसु चित्तेष्वार्द्रं भावमभिप्रायं प्रसह्य बलात्समासजन्तम् । आसञ्जयन्तमिति यावत् । 'मृदावार्द्रस्त्वसौ चापि' इत्युभयत्रा कोशः । प्रसन्नाकारेषु सर्वोऽपि विश्वसितीति भावः ॥ २ ॥

उनमें प्रसन्नता की सम्पूर्ण सामग्रियाँ पाई जाती थीं । शरीर की स्थूलता में सबसे बढ़े-चढ़े थे । जिसके कारण अपरिचित लोगों के हृदय में भी अपने विषय में श्रद्धा और भक्ति का भाव स्थापित करा देते थे ॥ २ ॥

अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भाषमिवेङ्गितेन ॥ ३ ॥

अनुद्धतेति । पुनरनुद्धताकारतया शान्ताकारत्वेन विविक्तां तदन्तःकरणस्य वृत्तिं विविक्तां पूताम् । शान्तामिति यावत् । 'विविक्तौ पूतविजनौ' इत्यमरः । तन्वन्तं प्रकटयन्तम् । आकृतिरेवास्य चित्तशुद्धिं कथयतीत्यर्थः । पुनर्माधुर्यं निसर्गसौम्यता

विस्रम्भो विश्वासः । 'समौ विस्रम्भविश्वासौ' इत्यमरः । तयोर्विशेषमतिशयं भजतीति तथोक्तेनेक्षितेन दर्शनेनैव कृतोपसम्भाषां सम्भाष्यम् येन तमिवेत्युत्प्रेक्षा । दृष्टिविशेषेणैवोपसम्भाषमाणमिव स्थितमित्यर्थः । काशिकायां तु 'उपसम्भाषणमुपसान्त्वनम्' इति भासनादिसूत्रे ॥ ३ ॥

उनका आकार शान्त था, जिससे उनके अन्तःकरण की सौम्यता के भाव स्पष्ट झलक रहे थे। सौम्यता और विश्वास पूर्ण अवलोकन से प्रतीत होता था कि इनसे कभी सम्भाषण हो चुका है ॥ ३ ॥

धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे ॥ ४ ॥

धर्मेति । धर्मं निबध्नन्तीति धर्मनिबन्धिनीनामग्निहोत्रादिधर्मप्रतिपादिकानाम् । एनः प्रणुदामघविघातिनाम् । क्विप् । श्रुतीनां वेदानाम् । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । प्रसूतिं प्रभवं सुखेनोपविष्टं मुनिं तदभ्यागमने तस्य मुनेरागमने हेतुं परीप्सुर्जिज्ञासुः । आप्नोतेः सन्नन्तादुप्रत्ययः । 'आप्ज्ञप्यृधामीत्' इतीकारः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । आबभाषे उवाच ॥ ४ ॥

अग्निहोत्रप्रभृति जो धार्मिक कृत्य हैं उनके प्रतिपादक और दुष्कृतों के विनाशक शास्त्रों के निर्माणकर्ता ( रचयिता ) थे। ऐसे मुनि के आगमन का कारण जानने की इच्छा से धर्मपुत्र ( युधिष्ठिर ) ने मुनि से कहा ॥ ४ ॥

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥

अनाप्तेति । अनाप्तपुण्योपचयैरकृतपुण्यसमूहैर्दुरापा दुर्लभा फलस्य सवित्री श्रेयस्करी निर्धूतरजा हतरजोगुणा, अन्यत्र निरस्तधूलिः । 'रजो रजोगुणे धूलौ परागार्तवयोरपि' इति यादवः । एषा भवद्दर्शनसम्पत्तिः । सम्पत् इति यादवः । सम्पदादिभ्य क्विपो भावार्थत्वात् । वीतबलाहकाया गतमेघाया दिव आकाशस्य सम्बन्धिन्या वृष्टेस्तुल्येत्युपमालङ्कारः । अनभ्रवृष्टिवदतर्कितोपनतं भवद्दर्शनं सर्वथा कस्यचिच्छ्रेयसो निदानमित्यर्थः । वारि वहतीति बलाहकः । पृषोदरादित्वात्साधु ॥ ५ ॥

आपकी यह दर्शन-सम्पत्ति, बिना पुण्य सञ्चय किये हुये पुरुषों के लिये दुष्प्राप्य है, यह रजोगुण से रहित है, और अभिलाषाओं को सफल बनाने में समर्थ है। यह मेघ-निर्मुक्त आकाश की वर्षा के सदृश है। मुझ-जैसे व्यक्ति के लिये आप का दर्शन असम्भावित था ॥ ५ ॥

अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः ।
आ संसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम् ॥ ६ ॥

अद्येति । अद्य कल्पतौ क्रिया मदनुष्ठानानि कामान् दुहन्तीति कामदुघाः । फलदा इत्यर्थः । दुहः कब् घश्च इति कप्प्रत्ययो घादेशश्च । भूमिदेवा ब्राह्मणाः । 'द्विजात्यग्रजन्मभूदेववाडवाः' विप्रश्च ब्राह्मणः इत्यमरः । तस्याशिषो जाताः । ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः । यतस्त्वय्यभ्यागते सति । त्वदागमनेनैव निमित्तेनेत्यर्थः । अस्मीत्यहमर्थेऽव्ययम् । 'अस्मीत्यस्मदर्थानुवादेऽहमर्थेऽपि' इति प्रयोगात् । आ संसृतेः संसारात् । आसंसारमित्यर्थः । अभिविधावाङ्विकल्पात् समासः । जगत्सु बहुमानपात्रं बहुमानस्थानमस्मि । आसम् । सकलकल्याणफलभूतं त्वदागमनं येन मे सम्पन्नमिति भावः ॥ ६ ॥

आज आप के शुभागमन से मेरे किये हुये कर्मानुष्ठान सम्पूर्ण कामनाओं के पूरक हुये । इस समय ब्राह्मणों का आशीर्वाद सत्य हो गया । जब से सृष्टि की रचना हुई है, तब से मैं ही आज इस संसार में सबसे अधिक सम्मान का पात्र हुआ ॥ ६ ॥

श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम् ।
संदर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते ॥ ७ ॥

श्रियमिति । आत्मयोनेर्ब्रह्मण इव लोकगुरोस्तवामोघमविफलं संदर्शनं श्रियं विकर्षत्याकर्षति । अघानि दुःखान्यपहन्ति । 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः । श्रेयः सुकृतं परिस्नौति स्रवति । कीर्तिं च तनोति किं बहुना किं न धत्ते किं न करोति । सर्वं करोतीत्यर्थः ॥ ७ ॥

जगद्गुरु आप का दर्शन स्वयम्भू ( ब्रह्मा ) के समान विफल नहीं हो सकता यह श्री की वृद्धि करता है पापों को निर्मूल करता है कल्याण की वर्षा करता है और कीर्ति का विस्तार करता है ॥ ७ ॥

श्च्योतन्मयूखेऽपि हिमद्युतौ मे न निर्वृतं निर्वृतिमेति चक्षुः ।
समुज्झितज्ञातिवियोगखेदं त्वत्संनिधावुच्छ्वसितीव चेतः ॥ ८ ॥

श्च्योतदिति । हे भगवन् ! श्च्योतन्मयूखे सुधाद्राविकरे हिमद्युतावपि हिमद्युतिबिम्बावपि विषये न निर्वृतम् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । मे चक्षुस्त्वत्संनिधौ निर्वृतिं सुखमेति । तथा चेतश्च समुज्झितज्ञातिवियोगखेदं त्यक्तबन्धुविरहदुःखं सदुच्छ्वसितीव प्रीणाङ्कुरोदयेन प्राणितीवेत्युत्प्रेक्षा । पूर्वार्धे तु निर्वृतिकारणे सत्यपि तदनिर्वृतिकथनाद्विशेषोक्तिः । तदुक्तं—'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति ॥ ८ ॥

अमृतमयी किरणों के परिस्रावकारी और शीतल ज्योतिःस्वरूप चन्द्रमा के दर्शन से मेरे नेत्र ( तृप्त ) नहीं होते थे वे ( आज ) आप के दर्शन से तृप्त हो गये । इस समय बान्धवोंके वियोगजनित दुःख का परित्याग कर मेरा हृदय पुनः जीवित हो उठा है ॥ ८ ॥

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणाम् ।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

निरास्पदमिति । प्रश्नकुतूहलित्वं निरास्पदम् । त्वदागमनप्रयोजनप्रश्नो निरास्पदं निरर्थमित्यर्थः । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्रश्नानवकाशे हेतुमाह—निःस्पृहाणाम् । युष्मादृशामित्यर्थः । अस्मास्वधीनमायत्तं किमु । न किञ्चिदस्मत्तो लभ्यमित्यर्थः । आधारत्वविवक्षायां सप्तमी । तथाऽपि कल्याणकरीम् । अस्मद्धितैकहेतुमित्यर्थः । निःस्पृहत्वे पारार्थ्यादिति भावः । 'कृञो हेतु—' इति टप्रत्यये ङीप् । अतस्ते गिरं श्रोतुमिच्छा माम् । मुखं वागस्यास्तीति मुखरो निरन्तरभाषी । 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति रः । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । ततश्च्विप्रत्ययः । मुखरीकरोति । व्याहारयतीत्यर्थः । निःस्पृहस्यापि ते वाक्यमस्मद्धितकरत्वाच्छ्रोतव्यमिति भावः ॥ ९ ॥

आप के आगमन के प्रयोजन की वार्ता सर्वथा निर्मूल है, क्योंकि जिन्हें किसी तरह की इच्छा नहीं है उनका हम लोगों के साथ प्रयोजन ही क्या हो सकता है ? । पर होते हुये भी आप के आगमनप्रयोजन की वार्ता जानने के लिए मेरी इच्छा मुझे प्रेरित करती है ॥ ९ ॥

इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

इतीति । इतीत्थमुक्तिविशेषरम्यमुक्तिवैचित्र्यचारु यथा तथोक्तवान् । उदारचेता महामना नरेन्द्रो द्वैपायनेन व्यासेन । द्वीपमयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः । स एव द्वैपायनस्तेन । 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः । नापत्यार्थे । 'नडादिभ्यश्च फक्' । तेष्वेव पाठाद्यापित्तार्थत्वात् । जयोपपत्तौ मनः समाधाय । जयसिद्धिमपेक्ष्येत्यर्थः । इति वक्ष्यमाणप्रकारामुदारामर्थवतीं गिरमभिदधे उक्तः । दुहादित्वादप्रधाने कर्मणि लिट् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' ॥ इति वचनात् ॥ १० ॥

उदार अभिप्राय वाले युधिष्ठिर ने पूर्वोक्त प्रकार की उक्ति के वैचित्र्य से सुन्दर वचन कहे । फिर मन के विजय काम का ध्यान रखते हुये व्यासजी ने उदार वचनों में महाराज से कहा ॥ १० ॥

आदौ तावत्तस्य माध्यस्थ्यमद्रोहमुखेन परिहरति—

चिचीषतां जन्मवतामलघ्वीं यशोऽवतंसामुभयत्र भूतिम् ।
अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥ ११ ॥

चिचीषतामिति । अलघ्वीं गुर्वीम् । 'वोतो गुणवचनात्' इति ङीप् । यशो-

क्या आप लोग उस धृतराष्ट्र के पुत्रों में से नहीं हैं? अथवा आप लोगों ने गुणों से सुयोधन को नहीं जीता है क्या? जिसने आप लोगों को व्यर्थ निर्वासित किया है, वे विषयेच्छुक धृतराष्ट्र हठपूर्वक अविवेकी बने हुये हैं ॥ १३ ॥

अथ राज्ञः स्वसाध्वर्द्धनाय शत्रोर्हानिं सूचयति—

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ १४ ॥

जहात्विति। एनं धृतराष्ट्रमर्थसिद्धिः कथं न जहातु। जहात्येवेत्यर्थः। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति प्राप्तकाले लोट्। तस्य त्यागकालः प्राप्त इत्यर्थः। कुतः। यो धृतराष्ट्रः संशय्य संदिह्य कर्णादिषु तिष्ठते। कर्णादीन्दुर्मन्त्रिणः संदिग्धार्थे निर्णेतृत्वेनाश्रयत इत्यर्थः। 'प्रकाशनस्थेयाख्ययोश्च' इति स्थेयाख्यायामात्मनेपदम्। तिष्ठतेऽस्मिन्निति स्थेयो विवादपदनिर्णेता। तथा हि। असाधुयोगा दुर्जनसंसर्गा जयान्तराया जयविघातकाः। किंच प्रमाथिनीनामुन्मूलनकारिणीनां विपदां पदानि स्थानानि। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। न केवलं जयघातिनः किंत्वनर्थकारिणश्चेत्यर्थः। धृतराष्ट्रोऽपि दुर्जनविश्वासाद्विनङ्क्ष्यतीति भावः ॥ १४ ॥

अर्थ सिद्धि (प्रयोजन सिद्धि) उस धृतराष्ट्र से, जो सन्देह-ग्रस्त विषयों का निर्णय करने के लिये कर्ण प्रभृति दुर्मन्त्रियों का आश्रय लेता है, क्यों नहीं अलग हो जाती?। क्योंकि दुष्टों का संपर्क विजय में बाधक होता है और सर्वनाशक विपत्तियों का स्थान होता है ॥ १४ ॥

एवं शत्रोरनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति—

पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय।
त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥

पथ इति। रिपूणां समितौ सभायाम्। 'सभासमितिसंसदः' इत्यमरः। पथश्च्युतायां मार्गाद् भ्रष्टायाम्। दुरात्मनो दुःशासनस्य द्रौपदीकेशग्रहणसाहसमङ्गीकृतवत्यामित्यर्थः। चिराय धर्म्यां धर्मादनपेताम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। धुरं भारं दधानेन। कष्टेष्वपि धर्मानुवर्तिनेत्यर्थः। त्वया विपत्स्वपि, अविपत्स्विव विभावयत एव रम्यं गुणेषु शान्त्यादिषु विषये परमुत्कृष्टं प्रेमाविष्कृतम् प्रकटीकृतम्। दुःसहमपि सोढवता त्वया साधु कृतमिति भावः ॥ १५ ॥

जब आप के शत्रुओं की सभा पथभ्रष्ट हो चुकी (जिसके फलस्वरूप दुःशासन ने द्रौपदी के वस्त्रापहरण की चेष्टा की) थी, उस समय भी आप लोग बहुत कालतक धर्मपूर्वक

अथ 'त्रि—'इत्यादिना श्लोकचतुष्टयेन विपक्षव्यायस्त्य वर्णयति—

त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः ।
वीर्यावधूतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥

त्रिःसप्तेति। त्रिरावृत्तान्सप्तवारास्त्रि सप्त त्रिःसप्त । एकविंशतिकृत्व इत्यर्थं । त्रि· सप्तशब्दयो 'सुप्सुपे'ति समास । 'संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच्प्रत्यय । जगतीपतीनां महीपतीनां हन्ता नाशको गुरुरस्त्रवेदोपदेष्टा । स प्रसिद्ध इत्यर्थं । अत एव यच्छब्दानपेक्षत्वम् । तदुक्त काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादान नापेक्षते' इति । जमदग्नेरपत्य पुमान् जामदग्न्य । 'गर्गादिभ्यो यञ्' इति यञ्प्रत्यय । यस्य भीष्मस्य वीर्यावधूतो विक्रमाभिभूत । अम्बिकास्वयंवर इत्यर्थं । तदा भङ्गप्राप्तिसमये गुणानां शौर्यादीनां प्रकर्षमतिशयमाधारवशमाश्रयाधीन विवेद ज्ञातवान् । स्म । स्वविद्यायाः स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्षाधानदर्शनादिति भाव.। 'स्म पादपूरणे भूतेऽर्थे च' इति विश्व ॥

परशुराम जमदग्नि ऋषि के पुत्र थे, जिन्होंने इक्कीस बार राजाओं का वध कर डाला था तथा शस्त्रविद्या के वे आचार्य थे । वे भी अपने शिष्य भीष्म से पराजित हो गये (हार गये) तब उन्होंने समझा कि जैसा पात्र होगा वैसा ही गुणों का प्रकर्ष होगा ॥ १८ ॥

यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन्धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥ १९ ॥

यस्मिन्निति । यस्मिन्भीष्मे विषये । अनीश्वरस्य भावोऽनैश्वर्यमसामर्थ्यम् । 'तत्र दृष्टीश्वरवरेन्द्रसङ्गुलकौशलकुशलनिपुणानाम्' इति विकल्पाभावात् पूर्वपदवृद्ध्यभावः । तेन कृतव्यलीको जनितवैलक्ष्य । 'तु से वैलक्ष्ये व्यलीकम्' इति यादव । अन्तकोऽपि यमोऽपि पराभव प्राप्त इव । भीष्मस्येच्छामरणत्वादन्तकोऽपि पराजित इवास्ते, किमुतान्य इति भाव । स भीष्मो रणे धनुर्धुन्वन्कम्पयन्कस्य मनो भयैकप्रवण भय एकप्रवणमेकोन्मुखम् । विषयभावावस्थासमास· । न कुर्यात् । सर्वस्यापि मनसि भय कुर्यादेवेत्यर्थः ॥ १९ ॥

जिन भीष्मपितामह के विषय में यमराज भी असामर्थ्य से दुखी होकर पराजित सा हो गया, वही भीष्म युद्धस्थल में धनुष्कम्पन करते हुये किस के मन में भय उत्पन्न नहीं करेंगे अर्थात् सभी लोग भय से व्याप्त हो जावेंगे अर्थात् भीष्म ऐसे वीर दुर्योधन के सहायक है, इसलिये वह आपसे बल में बढ़कर है ॥ १९ ॥

सृजन्तमाजाविषुसंहतीर्वः सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २० ॥

ताम्ररूपं येन तेन । कपिहनुमान्केतन चिह्नं यस्य तेन । अर्जुनेनेत्यर्थः । दुरापमन्यस्य दुर्लभं वीर्यं तेजः समवाप्य । एते पूर्वोक्ता भीष्मादय उन्मूलिताः उन्मूलयिष्यन्ते । उन्मूलयतेर्ण्यन्तात्कर्मणि लुट् । अत्र चिण्वदिडागमेऽपि तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वाद् 'णेरनिटि' इति णिलोपः । तन्निमित्तस्यैव 'अनिटि' इति निषेधात् । उक्तं च—"चिण्वद् वृद्धियुंक्च हन्तेश्च घत्वं, दीर्घश्चोक्तो यो मितां वा चिणीति । इड् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वह्निमित्तो विघाती ॥" इति ॥ २२ ॥

जिस मन्त्रविद्या के अनुसार अर्जुन उग्र तपस्या करके पाशुपतास्त्र रूप साधन प्राप्त करेंगे और जिसके कारण दुष्प्राप्य पराक्रम प्राप्त करके वह इन भीष्म द्रोण और कर्ण प्रभृति वीरों का नाश करने में समर्थ होंगे ॥ २२ ॥

महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप ! देवतानाम् ।
दातुं प्रदानोचित ! भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम् ॥ २३ ॥

महत्त्वेति । हे नृप ! महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नां महानुभावानां देवतानामिन्द्रादीनाम् । आराध्यतेऽनयेत्याराधनी ताम् । प्रसादयित्रीमित्यर्थः । करणे ल्युट् । ङीप् । भूरिधाम्नीं महाप्रभावाम् । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति विश्वः । 'अन उपधालोपिनोऽन्यतरस्याम्' इति वा ङीप् । तां विद्यामिन्द्रमन्त्ररूपां सिद्धिं साक्षात्कार्यसिद्धिमिवेति विद्याया अमोघत्वोक्तिः । हे प्रदानोचित ! दानपात्रभूत ! फललोभनहेतुत्वादस्य पात्रत्वोक्तिः । दातुमुपागतोऽस्मि ॥ २३ ॥

हे प्रदानपात्र ! यह मन्त्रविद्या—जिसके द्वारा महामहिमशाली इन्द्रादिक देवताओं का आराधन किया जाता है, जिसका पराक्रम अतुल है और जो साक्षात् अणिमा, महिमा लघिमा इत्यादि सिद्धिस्वरूपा है, उसी मन्त्रविद्या का प्रदान करने के लिये आप के यहाँ उपस्थित हुआ । इससे आप लोगों के प्रभाव ( बल और पराक्रम ) की अभिवृद्धि होगी ॥

इत्युक्तवन्तं व्रज साधयेति प्रमाणयन्वाक्यमजातशत्रोः ।
प्रसेदिवांसं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥ २४ ॥

इतीति । इत्युक्तवन्तं प्रसेदिवांसं प्रसन्नम् । ' । सदवसश्रुवः ' इति क्वसुः । तं मुनिं जिष्णुर्जयनशीलोऽर्जुनः । 'ग्लाजिस्थश्च—' इति ग्स्नुप्रत्ययः । व्रज साधय साधनानुतिष्ठेत्येवरूपम् । अजातशत्रोर्धर्मराजस्य । स्वयमविद्वेषणशीलत्वादियं संज्ञा । वाक्यं प्रमाणयन् । तदादिष्टं सन्नित्यर्थः । अन्ते वसतीत्यन्तेवासी इव 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । विनयेनानौद्धत्येनोपाससाद समीपं प्राप ॥ २४ ॥

अर्जुन, शिष्यों की तरह ( ज्येष्ठ भ्राता ) युधिष्ठिर की 'जाओ, तपस्या करो' इस आज्ञा का स्वीकार कर विनम्र भाव से, विद्या का महात्म्य समझाते हुये तथा प्रसन्नमुख वेदव्यास के समक्ष उपस्थित हुये ॥ २४ ॥

अर्जुन के अन्तःकरणमें उत्साह झलक रहा था। उनकी आकृति महान् लाभ की सूचना दे रही थी। उन्हें विजयलाभ दिलाने वाले तपोनियम में लगाते हुये व्यासजी ने कहा—

अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन्।
समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम्॥ २८॥

अनेनेति। अनेन स्वोपदिष्टेन योगेन विवृद्धतेजा निजां पदवीं परस्मा अयच्छन्। परस्य प्रवेशमयच्छन्नित्यर्थः। उपात्तशस्त्रो निगृहीतायुधः सन्। जपोपवासाभिषवैः स्वाध्यायानशनस्नानैर्मुनीनामाचारं समाचरानुतिष्ठ॥ २८॥

तुम (इस मेरे द्वारा उपदिष्ट) योग से अपने तेज और पराक्रम की वृद्धि करके, अपने मार्ग को किसी को प्रदर्शन न कराते हुये (अर्थात् गुप्त रूप से) हाथ में शस्त्र धारण कर मन्त्र जप, आहार परित्याग और अभिषेक पूर्वक ऋषियों की वृत्ति को धारण करो॥ २८॥

क्षेत्रविशेषे तपःसिद्धिरित्याशयेन तं निर्दिशन्नाह—

करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि।
शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम्॥ २९॥

करिष्यस इति। यत्र शिलोच्चये गोत्रभिद इन्द्रस्य प्रसत्तये प्रसादाय सुदुश्चराणि तपांसि करिष्यसे, चारुशिलोच्चयं रम्यशिखरं तं शिलोच्चयं गिरिमिन्द्रकीलकम्। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। एष गुह्यको यक्षः। अनन्तरमेवास्य पुरः प्रादुर्भावादेष इति निर्देशः। क्षणान्नेष्यति प्रापयिष्यति॥ २९॥

जिस पर्वत पर इन्द्र के प्रसादार्थ तुम्हें उग्र तपश्चर्या करनी है, उस रम्य शिखर युक्त पर्वत पर यह यक्ष तुम्हें क्षणमात्र में पहुँचा देगा॥ २९॥

इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे।
तं राजराजानुचरोऽस्य साक्षात् प्रदेशमादेशमिवाधितष्ठौ॥ ३०॥

इतीति। इतीत्थं महेन्द्रसूनुमर्जुनं ब्रुवाणेनोक्तवता। 'वर्तमानसामीप्ये' इति भूते वर्तमानप्रत्ययस्तिरो क्षिप्रत्वसूचनार्थम्। तेन महर्षिणा तिरोबभूवेऽन्तर्दधे। भावे लिट्। राजराजो यक्षराजः। 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति विश्वः। तस्यानुचरः पूर्वोक्तयक्षोऽस्य मुनेरादेशं साक्षादिव तं प्रदेशमर्जुनाधिष्ठितस्थानमधितष्ठौ। प्राप इत्यर्थः। 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति षत्वम्॥ ३०॥

व्यासजी, इन्द्रपुत्र अर्जुन से पूर्वोक्त प्रकार का वार्तालाप समाप्त कर अन्तर्हित हो गये। इसके पश्चात् कुबेर का अनुचर (यक्ष) मुनि के मूर्तिधारी आदेश की तरह अर्जुन के पास आ खड़ा हुआ॥ ३०॥

दुःखत्वं भवतीति भावः । पूर्वोक्तो दुःखमेवातिभारोऽपि । अतिभारभूतमपि दुःखमित्यर्थः । सन्मनोभिस्तेषां चतुर्णां पार्थानां मनोभिस्तुल्यादिविभागादिव पूर्वोक्तार्थेनकृतात् समविभागादिवेत्यर्थः । वस्तुतस्तु विवेकादेवेति भावः । पुनर्विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थमनुवादत्वाददोषः । लघुर्मेने मतः । यथैकोऽनेकधा विभज्य बहुभिरुह्यमानो महानपि भारो लघुर्मन्यते तद्वदित्यर्थः ॥ ३३ ॥

चारों भाइयों ने चित्त से सद्भाव का परित्याग करके कार्य्य भार के ऊपर विचार किया था, अतः दुःख का भार दूर हो गया था, परन्तु आतृप्रेम के कारण फिर उसे उन्होंने एकत्रित कर के मन से समान भागों में मानो विभक्त कर लिया, जिस के कारण वह हल्का मालूम पड़ने लगा ॥ ३३ ॥

अथैषां प्रेम्णाऽऽक्रम्यमाणमपि शोकं विवेको निर्वासयतीत्याह—

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥ ३४ ॥

धैर्येणेति । धैर्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेर्व्यासस्य । प्रवर्तकस्येति शेषः । वि　　　 । । अदेयवचनत्वेनेत्यर्थः । अरातिप्रभवादरातिहेतुकात्तीव्रात् दुःसहान्मन्यो क्रोधाद्धेतोस्तथाऽर्जुनप्रभावपरिज्ञानाच्चेति हेत्वन्तरं विशेषणमुखेनाह—मघोनः सुतेऽर्जुने वीर्यं च । 'न लोके—' इत्यादिना षष्ठीप्रतिषेधः । विद्वत्सु । जानत्सु इति यावत् । 'विदेः शतुर्वसुः' इति वैकल्पिको वस्वादेशः । तेषु पार्थेषु स शोकः स्थानं स्थितिं नावाप न प्राप ॥ ३४ ॥

वे चारों भ्राता स्वाभाविक धैर्यशाली थे, महर्षि वेदव्यास के वचनों में श्रद्धा रखते थे, शत्रु के दुर्व्यवहार से उन के क्रोध की मात्रा भी बहुत बढ़ी चढ़ी थी, और इन्द्र के पुत्र अर्जुन के शौर्य को वे जानते थे, अतः वह उन पाण्डवों के पास शोक ठहर न सका ॥ ३४ ॥

तान् भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म कृष्णां विभावरी ध्वान्तमिव प्रपेदे ॥ ३५ ॥

तानिति । तस्यार्थोऽस्य सकलक्रमं सुगमम् । 'अशर्मसातसुखानि च' इत्यमरः । तद्धित　　 दुःखम् । 'नञ्' इति नञ्समासः । भूरिधाम्नोऽतितेजस्विन इति हानिहेतुत्वोक्तिः । चतुरस्तान्पार्थानपि वासरस्य भूरिधाम्नश्चतुरो यामान्प्रहरानिव । दूरं विहाय त्यक्त्वैकौघभूतमेकराशिभूतं सत् । 'श्रेण्यादयः कृतादिभिः' इत्यर्थे कर्मधारयः, 'श्रेण्यादिराकृतिगणः' इति शाकटायनः । कृष्णां विभावरी कृष्णपक्षरात्रिर्ध्वान्तमिव । कृष्णां द्रौपदीं प्रपेदे प्राप ॥ ३५ ॥

जैसे अन्धकार परम प्रकाशमान दिन के चारों पहरों का अतिक्रमण कर एकत्र होकर

क्षतनैर्मल्या । क्षोम गमितेत्यर्थः । राजपुत्री क्षत्रियसुता द्रौपदी । अतः धात्त्र्युक्तमेव यथ्यतीति भाव । निरुद्धबाष्पोदय सन्नदरोदय सक्षामकण्ठ क्षीणस्वरम् । अथ तयोरुभयो कृतबहुव्रीह्योः क्रियाविशेषणयोर्विशेषणसमासः । कृच्छ्रात्कथंचिदिति वक्ष्यमाणमुवाच ॥

जिस तरह जङ्गली हाथी ग्रीष्म काल में नदियों की निर्मलता का अपहरण कर लेता है, उसी तरह धैर्य्य की न्यूनता ने राजकुमारी को प्रसन्नता का अपहरण कर लिया । अश्रुवेग के निरोध से उनका स्वर क्षीण हो गया था, इस लिये वह कष्ट के साथ बोली—॥ ३८ ॥

मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामा तपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः ॥ ३९ ॥

मग्नामिति । पङ्कभूते पङ्कोपमिते । 'भूत प्रमाऽऽत्मौ पिशाचादौ न्याय्ये सत्योपमानयो' इति विश्व । द्विषच्छद्मनि शत्रुकपटे मग्नाम् । बुद्धामित्यर्थः । सम्भावनां पौरुषताम् । गौरवमिति यावत् । भूतिं सम्पदमिव । 'भूतिर्भस्मनि सम्पदि' इत्यमर । उद्धरिष्यन् । उद्धारकस्त्वमिति शेष । आधिद्विषा तु आधिहृदा तपसामा प्रसिद्धेः सम्यक्सिद्धिपर्यन्तमस्मद्विना । अस्माभिर्विनेत्यर्थः । 'पृथग्विना—' इत्यादिना विकल्पात्तृतीया । भृशं मोन्मनीभूः । अस्मद्विरहाद् दुर्मना मा भूरित्यर्थः । दौर्मनस्यस्य तप परिपन्थित्वादिति भाव । 'माङि—' इत्याशीरर्थे लुङ् । 'न माङ्योगे' इत्यडागमप्रतिषेध । अनुन्मना उन्मना सम्पद्यमान उन्मनी । अभूततद्भावे च्वि । 'अरुर्मनश्चक्षुश्चेतोरहोरजसा लोपश्च' इति सकारलोप । 'च्वौ च' इतीकार ॥ ३९ ॥

शत्रु के कपटरूप कीचड़ में फंसे हुवे सम्पत्तिरूप गौरव के आप ही उद्धारकर्ता हैं, इसलिये मानसिक व्यथा के दूर करने में समर्थ तपस्या की सिद्धि पर्य्यन्त हम लोगों के विरह से आप व्यथित न हों ॥ ३९ ॥

अथानौत्सुक्यमवलम्ब्यार्थं तस्य सर्वार्थसिद्धिनिदानत्वमाह—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥

यश इति । यशोऽधिगन्तुम् । कीर्तिं लब्धुमित्यर्थः । सुखस्य लिप्सया लब्धुमिच्छया वा । मनुष्यसंख्यां मनुष्यगणनामतिवर्तितुमतिक्रमितुं वा । अमानुषं कर्म कर्तुं चेत्यर्थः । अभियोगभाजामभिनिवेशवतां निरुत्सुकानामनुत्सुकानाम् । अनुर्मनायमानानामित्यर्थः । सिद्धिः पूर्वोक्तस्य सुखाद्यर्थसिद्धिः । समुत्सुकेवानुरक्तकान्तेवाङ्कमुत्सङ्गमन्तिकं वोपैति । तस्मादस्मद्विरहदुःखमा तपःसिद्धेः सोढव्यमिति भावः ॥

कीर्तिलाभ करने के लिये, सुख को पाने की, तथा मनुष्य की संख्या को उल्लंघन करने ( सब से बढ़कर कहे जाने ) की इच्छा से कार्य्य करने के लिये उद्यत जो पुरुष उत्कण्ठा का परित्याग कर देते हैं, उनको सिद्धि उत्कण्ठित रमणी की तरह अङ्कस्थ ` होती है ॥ ४० ॥

वितानमपि दिगन्तलग्नमिति भावः । वितत्य प्रथितं यश समुद्रमिव संकोचयन्निवे-त्युत्प्रेक्षा । अरातिपरिभूतस्य कुतः कीर्तिरिति भावः ॥ ४२ ॥

( दुर्योधन के समक्ष दुःशासन के द्वारा जो मेरा केशाकर्षणरूप निन्दित कर्म किया गया है ) उस से और देशान्तर स्थित राजाओं ने पहले तो विश्वास नहीं किया फिर आप लोगों के मुख से निकलने के कारण किसी तरह विश्वास कर लज्जा से शिर झुका लिया। तथा उस सभा में उपस्थित आतीय और सम्बन्धी राजाओं ने इस कुत्सित कर्म को देख लज्जित हो कर किसी तरह उस की उपेक्षा की'—इस तरह का जो शत्रुकृत पराभव है, वह पृथ्वी के एक छोर से दूसरे छोर तक चंदोवे की तरह फैले हुये आप के यश को सङ्कुचित करते हुए की तरह है ॥ ४२ ॥

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्वन्प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३ ॥

वीर्येति । पुनश्च । वीर्याण्येवावदानानि तेषु कृतावमर्षं कृतास्कन्दनः । पुराकृत-पराक्रमकार्याण्यपि प्रमृजन्नित्यर्थः । 'अवदानं कर्म वृत्तम्' इत्यमरः । अत एव सम्प्रतीतिं ख्यातिम् । 'ख्यातिः प्रथितख्यातविक्तविज्ञातविश्रुताः' इत्यमरः । अभूतान् निवेत्युत्प्रेक्षा । सतोऽप्यसत्त्वमुत्प्रेक्षते—तन्वन्कुर्वन् । पुनश्चाह्नोऽवशेषो दिनान्तोऽर्कत्विषामिवायतीनामुत्तरकालानां प्रयामक्षयं दैर्घ्यनाशं कुर्वन्निति श्रौती पूर्णोपमा । अरिभिराक्रान्तस्य कुतश्चिरावस्थानमिति भावः ॥ ४३ ॥

यह शत्रुकृत पराभव, आप लोगों के पूर्व कृत पराक्रम के कार्य्यं पर परदा डालता हुआ, 'आपने पराक्रम का कार्य्यं कभी किया ही नहीं है' इस तरह की प्रसिद्धि ( ख्याति ) लोगों के बीच में फैलाता है और जैसे दिन का अवशिष्ट भाग दिशाओं में फैले हुये सूर्य्यं की किरणों का संहार कर डालता है वैसे ही यह निकार ( पराभव ) आप के उत्तर काल की स्थिरता का संहार कर रहा है ॥ ४३ ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्तुं न शक्यः किमुताधिकर्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः ॥ ४४ ॥

प्रसह्येति । पुनश्च । परैः शत्रुभिरस्मासु प्रसह्य प्रयुक्त आचरितो यो निकारः परिभवः केशाकर्षणरूपः स्मर्तुं न शक्यः । अधिकर्तुमनुभवितुं किमुत । यस्य स्मर्तुमपि दुःसहत्वमनुभवस्तु दुःसह इति किमु वक्तव्यमित्यर्थः । स निकारस्त्वद्विना त्वया विना 'पृथग्विना–' इत्यादिना पञ्चमी । आर्द्रः सन्कुठारच्छिन्नमूलस्यारुणप्रहार इव । त्वद्विरहदुःखात् पुनर्नवीकरिष्यति । नवीभविष्यतीत्यर्थः । उपशुष्यत् । त्वया विना शुष्कमिति भावः । दुःखसन्तप्त कोपपदार्थों मे हृदयं नवीकरिष्यत्यार्द्रीकरिष्यति ।

दुःशासनेति । पुनश्च । दुःशासनस्य कर्तुरामर्षं आमर्षेणमाकर्षण स एव रजो धूलिः । मालिन्यहेतुत्वादिति भावः । तेन विकीर्णैर्विक्षिप्तैरत एव धिनायैरिव स्थितवतां युष्माकमसत्त्वप्रायत्वादनाथैरिव स्थितैरित्युत्प्रेक्षा । अन्यथा कथमियं दुर्दशेति भावः । किन्तु भावयनायैदवमाग्रसरणै । अन्यथा स्वरूपमपि लुप्येतेति भावः । एभिः परिदृश्यमानैः । असत्यमितैरिति भावः । केशैः शिरोरुहैः कुत्सितोऽर्थो वस्तु कदर्थं । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । 'को कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः । कदर्थीकृतौ गर्हार्थीकृतौ वीर्यसारौ शौर्यबले यस्य स तथोक्तः । इत्थं पूर्वविलक्षणस्त्वं स एव धनञ्जयोऽसि कच्चित् । 'कच्चित्कामप्रवेदने' इत्यमरः । स एव नैव नैवमस्मानुपेक्षस इति भावः ॥ ४७ ॥

दुःशासन के क्रोधरूप (घसीटे जाने के कारण) धूल से भरे हुये, असहाय की तरह ईश्वर के भरोसे रहने वाले इन मेरे केशपाशों से जिस आपका पराक्रम और बल–दोनों जुगुप्सा को प्राप्त हुए हैं, क्या आप वही अर्जुन हैं ? ॥ ४७ ॥

अथाप्युपेक्षणे दोषमाह—

> स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः ।
> वहन् द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥

स इति । क्षतात्त्रायत इति क्षत्रः क्षत्रियकुलकम् । 'सुपि' इति योगविभागात्क प्रत्ययः । पृषोदरादित्वात्पूर्वपदस्यान्त्यलोपः । अथवा क्षदिति क्विबन्तोपपदात्क प्रत्ययः । क्षत्रे जातः क्षत्रियः । 'क्षत्राद् घः' इति घप्रत्ययः । कर्मणे प्रभवतीति कार्मुकम् । 'कर्मण उकञ्' इत्युकञ्प्रत्ययः । एवं स्थिते वाक्यार्थः कथ्यते । यः सतां साधूनाम् । सहत इति सहः । पचाद्यच् । त्राणस्य सहस्त्राणसहो रक्षणक्षमः स एव क्षत्रियशब्दवाच्यः । तथा यस्य कार्मुकस्य कर्मसु रणक्रियासु शक्तिः । अस्तीति शेषः । तदेव कार्मुकशब्दवाच्यम् । अन्वर्थौ शब्दौ मुख्यौ । नान्यथेत्यर्थः । एवं स्थिते द्वयीं द्विविधामुक्तिम् । द्वाविमौ क्षत्रियकार्मुकशब्दावित्यर्थः । अफले । पूर्वोक्तावयवार्थशून्ये, अर्थजाते । स्वाभिधेयसामान्यजातिमात्र इत्यर्थः । 'जातं जात्योघजन्मसु' इति विश्वः । वहन्वर्तयन् । असंस्कारहतामव्युत्पत्तिदूषितामिव करोतीत्युत्प्रेक्षा । तस्मात्त्वमस्मद्रक्षणेनोक्तदोषादात्मानं मोचयस्वेत्यर्थः ॥ ४८ ॥

जो सज्जनों की रक्षा करने में समर्थ हो, वही क्षत्रिय है । जिसकी कर्म ( कार्य्य ) करने में अर्थात् संग्राम में कार्य्य करने की शक्ति हो, उसी का नाम कार्मुक है । यदि इन दोनों प्रकार की व्युत्पत्तियों के होते हुये भी व्युत्पत्ति का अर्थ सुसघटित नहीं होता अर्थात् ये दोनों ( क्षत्रिय और कार्मुक ) अपने अवयवार्थ के अनुकूल कार्य्य करने में असमर्थ पाये जाते हैं तो व्याकरण शास्त्र के अनुसार इन शब्दों की व्युत्पत्ति कर के इन का साधन

पूर्वं निर्व्यवसायस्य 'स क्षत्रियः' इत्यादिना दोष उक्तः। सम्प्रति व्यवसायिनो गुणमाह—

करोति योऽशेषजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः।
संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या॥ ५१॥

करोतीति। यः पुमान् अशेषजनादितरजनादतिरिक्तामधिकाम्। सर्वातिशायिनीमित्यर्थः। सम्भावनां योग्यतां क्रियाभिर्व्यापारैरर्थवतीं सफलां करोति। तं पुमांसं संसत्सु सभासु 'सभासमितिसंसदः' इत्यमरः। पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति पूर्यतेऽनयेति पूरणी संख्या। द्वित्वादिसंख्या। न समुपैति न गच्छति। अद्वितीयो भवतीत्यर्थः। तस्मादसाधारणलाभाय त्वयाऽपि महानुत्साह आस्थेय इति भावः॥ ५१॥

जो व्यक्ति, अपने कर्तव्यों से (अपनी) सब श्रेष्ठ योग्यता को सफल बनाता है, सभा में योग्य पुरुष की गणना का प्रस्ताव उपस्थित हो जाने पर उस पुरुष की समानता के लिये फिर दूसरी संख्या उस के पास नहीं आती अर्थात् वह वा एक (अद्वितीय) गिना जाता (सर्व प्रथम होता) है॥ ५१॥

अथ द्वाभ्यां युद्धाभियुक्तस्य प्रोषितस्यार्जुनस्य कर्तव्यमुपदिशति—

प्रियेषु यैः पार्थ विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः।
तव प्रयातस्य जयाय तेषां क्रियादघानां मघवा विघातम्॥ ५२॥

प्रियेष्विति। हे पार्थ! प्रियेष्वस्मासु विषये। उपपत्तेः कारणाद्विनैव विचिन्त्यमानैर्यैर्दोषैश्चेतः क्लमं खेदमेति। जयाय प्रयातस्य तव सम्बन्धिनां तेषामघानां व्यसनानाम्। 'दुःखैनोव्यसनेष्वघम्' इत्यमरः। मघवेन्द्रः। योऽस्माभिरुपास्यत इति भावः। विघातं निवारणं क्रियात्करोतु। आशिषि लिङ्। तस्मादस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया। अन्यथा तत्क्षतत्वादिति भावः॥ ५२॥

हे पृथापुत्र! विजयार्थ प्रस्थान करने वाले आप के उन [illegible]ओं का नाश देवराज इन्द्र करें, जो प्रिय लोगों के विषय में बिना किसी कारण के दोषे [illegible] भी चिन्तन किये जाते हैं, जिनसे चित्त व्यथित होता है॥ ५२॥

मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे।
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि॥ ५३॥

मा गा इति। असम्बाधोऽसङ्कटः। विजन इत्यर्थः। 'सङ्कटं ना तु सम्बाधः' इत्यमरः। शिवो निर्बाधः। द्वयोरन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमासः। तस्मिन्नसम्बाधशिवेऽपि देशे चिराय चिरमेकमात्रौ चरतीत्येकचरः एकाकी वसन्

अथाभिपश्यन्निव विद्विषः पुरः पुरोधसाऽऽरोपितहेतिसंहतिः ।
बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम् ॥५६॥

अथेति । अथ विद्विषः शत्रून् पुरोऽभिपश्यन्निव स्थितस्तथा पुरोधसा धौम्येनारोपिता समन्त्रमाहिता हेतिसंहतिरायुधकलापो यस्य स तथोक्तः । 'हेतिर्ज्वालाऽङ्कुरायुधे' इति वैजयन्ती । सोऽर्जुनो रम्यः सौम्यः सन्नपि । अभिचारः परहिंसा प्रयोजनं यस्याः साऽऽभिचारिकी । 'प्रयोजनम्' इति ठञ् । तां क्रियां गतः । अभिचारकर्मणि नियुक्त इत्यर्थः । मन्त्र इव रम्यः प्रकृत्या रमणीयः । भीषयत इति भीषणम् । नन्द्यादित्वाल्ल्युप्रत्ययः । वपुर्बभार । शान्तो मन्त्रः प्रयोगभेदादिव सोऽप्यवस्थाभेदाद्भीषणो बभूवेत्यर्थः ॥ ५६ ॥

शत्रुओं को सम्मुख उपस्थित की भाँति देखते हुये अर्जुन के समीप पुरोधा ( धौम्यने ) समन्त्र आहित शस्त्रों को स्थापित कर दिया । उस ( अर्जुन ) ने, स्वाभाविक सौम्य मूर्ति होने पर भी मारण क्रिया में प्रयुक्त सुरम्य मन्त्र की तरह भयङ्कर आकृति को धारण किया ॥५६॥

अविलङ्घ्यविकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम् ।
अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥

अविलङ्घ्येति । परैः शत्रुभिरविलङ्घ्यमनतिक्रमणीयं विकर्षणं यस्य तत् । अमोघाकर्षणमित्यर्थः । किञ्च प्रथितो ज्यारवो गुणध्वनिः कर्म बाणमोक्षणादिकं च यस्य तत्कार्मुकं चोद्वहन्नित्यन्वयः । तथाऽरीणां दृष्टिगोचरं दृष्टिपथमगतौ । आहवेष्वनिवर्तित्वादस्येति भावः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । डच्प्रत्यये संख्याया अतत्पुरुषस्योपसंख्यानात्समासान्तः । तेन शितेन तीक्ष्णेन युज्येते इति शितनिस्त्रिंशयुजौ । 'सत्सूद्विष-' इत्यादिना क्विप् । महेषुधी महानिषङ्गौ । इषवो धीयन्तेऽनयोरिति विग्रहः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' । तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः ॥ ५७ ॥

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षती: ।
कवचं च सरत्नमुद्वहञ्ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥

यशसेति । किञ्च । गोत्रभिद इन्द्रस्यायुधक्षतीर्वज्रप्रहारव्रणानि । खाण्डवदाहसम्भवादिति भावः । महसा स्वकान्त्या यशसेव मूर्तया कीर्त्येव मुहुस्तिरोदधदाच्छादयन् । सरत्नं रत्नसहितमत एव ज्वलितज्योतिर्दीप्तताराकम् । 'ज्योतिस्ताराऽग्निभाज्वालादृक्पुत्रात्मधरासु च' इति वैजयन्ती । दिवोऽन्तरं नभो मध्यमिवावस्थितम् । 'अन्तरं परिधानीये बाह्ये स्वीयेऽन्तरात्मनि । छिद्रे मध्ये प्रकाशे च' इति वैजयन्ती । कवचं चोद्वहन् ॥ ५८ ॥

भेदेऽभेदलक्षणातिशयोक्तिबलादाश्लिष्टोक्तिरिति रहस्यम् । एवमतिशयोक्त्यनुप्राणिता समासोक्तिः । प्रियकथनात्स्नेहमुज्जीवयति तदङ्गभावं भजत इत्युभयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥ ६० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां तृतीयः सर्गः समाप्तः ॥

---

अर्जुन के प्रस्थानकाल में स्वर्ग में देवताओं ने दुंदुभि बजायी, जिससे सम्पूर्ण दिशायें गूँज ( झङ्कृत हो ) उठीं । देवताओं ने पुष्पवृष्टि की, जिससे आकाशमण्डल अलङ्कृत हो उठा । समुद्र अपनी चञ्चल तरङ्ग रूप भुजाओं से शुभ सन्देश सुनाते [illegible] की तरह उल्लास से भरी पृथ्वी का आलिङ्गन किया अर्थात् समुद्र में भी तूफान आगया ॥ ६० ॥

इस प्रकार 'प्रकाश' व्याख्या में तृतीय सर्ग समाप्त हुआ ॥ ३ ॥

---

## चतुर्थः सर्गः

ततः स कूजत्कलहंसमेखलां सपाकसस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः प्रियामिवासादितयौवनां भुवम् ॥ १ ॥

तत इति । ततः प्रस्थानानन्तरं जनप्रियः सोऽर्जुनः । कलहंसा मेखला इवेत्युपमित । अन्यत्र कलहंसा इव मेखलेति विशेषणसमासः । कूजन्ती कलहंसमेखला यस्यास्ताम् । सह पाकेन वर्तन्त इति सपाकानि सस्यानि तैः सस्यैराहित उपाहितः पाण्डुतैव गुणो यस्यास्ताम् आसादितयौवनां प्राप्तयौवनां प्रियामिव । उपजनं जनसमीपे । अन्यत्र सखीसमक्षम् । समीपार्थेऽव्ययीभावः । उपाससादोपगतवान् । उपमालङ्कारः ॥ १ ॥

प्रस्थान के बाद लोकप्रिय ( अर्जुन ) सखियों के समक्ष कलकूजन करते हुये राजहंस की तरह निस्वन ( शब्द ) कारिणी मेखला ( करधनी ) धारण की हुई, तथा ( युवावस्था को प्राप्त ) प्रौढा रमणी की भाँति, मेखला की तरह कलकूजन करने वाले राजहंस जहाँ विचर रहे थे, ऐसी और परिपाक दशा को प्राप्त धान्यराशि के कारण गौरवर्णा भूमि के पास पहुँचे, जहाँ कृषक निवास करते थे ॥ २ ॥

विनम्रशालिप्रसवौघशालिनीरपेतपङ्काः ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स स्थलीरुपायनीभूतशरद्गुणश्रियः ॥ २ ॥

अर्जुन कमलयुत जल में धान की शोभा का अवलोकन करते हुये इतना प्रसन्न हुये जितना हो सकते थे। दुष्प्राप्य तथा योग्य सम्बन्ध प्राप्त होने पर कौन ऐसा मनुष्य होगा जो उत्कृष्ट सम्पत्ति का स्वागत न करे ? ॥ ४ ॥

नुनोद तस्य स्थलपद्मिनीगतं वितर्कमाविष्कृतफेनसन्तति ।
अवाप्तकिञ्जल्कविभेदमुच्चकैर्विवृत्तपाठीनपराहतं पयः ॥ ५ ॥

नुनोदेति । आविष्कृता प्रकटीकृता फेनसन्ततिर्डिण्डीरसमूहो यस्य तत्तथोक्तम् । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । अवाप्तः किञ्जल्कविभेदः केसरोपगमो येन तत्तथोक्तम् । उच्चकैरुच्चं यथा तथा विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतं ताडितम्, 'सहस्रदंष्ट्रः पाठीनः' इत्यमरः । पयः कर्तृ तस्यार्जुनस्य स्थलपद्मिनीगतम् । तद्गोचरमित्यर्थः । वितर्कं संशयं नुनोद चिच्छेद । पाठीनपराहत्या किञ्जल्कापायेन जलपद्मीमात्स्यकपद्मिनीशङ्का निवृत्तेत्यर्थः । अत्र निश्चयोत्तरसन्देहालङ्कारः ॥

कहीं २ सरोवरों के जल, जिनमें विकचारविन्द (खिले हुए कमल) सुशोभित हो रहे थे, फेन और कमलपराग से आच्छादित थे जिन्हें देख कर अर्जुन को पृथ्वी पर खिले हुये गुलाब के पुष्प का भ्रम हो रहा था। ऊपर की ओर उल्लुण्ठन करते हुये पाठीन (हजार दाँत वाली मछली) से अभिताडित होकर पुष्पपराग और फेनराशि के हट जाने से जल दिखलाई पड़ने लगता था, जिससे अर्जुन का सन्देहविच्छेद हो गया ॥ ५ ॥

कृतोर्मिरेखं शिथिलत्वमायता शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डुसैकतम् ॥ ६ ॥

कृतेति । सोऽर्जुनः शिथिलत्वमायता गच्छता । शनैः शनैः क्षीयमाणेनेत्यर्थः । अतएव शनैः शनैः शान्तरयेण । अल्पयोर्मिरेखानुवृत्तिरिति भावः । वारिणा कृता ऊर्मय पर्वाण्येव रेखा राजयो यस्य तत्तथोक्तम् । तरङ्गा अस्य सञ्जातास्तरङ्गितं भङ्गिमत् । 'तदस्य सञ्जातं-' इतीतच् । तरङ्गितक्षौमं दुकूलं तद्वद्विपाण्डु शुभ्रमित्युपमालङ्कारः । समुद्रयोषितां नदीनाम् । सिकताः सन्त्यस्मिन्निति सैकतं पुलिनम् । 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । निरीक्ष्य रेमे तुतोष ॥ ६ ॥

क्रमशः क्षीणोन्मुख वेगरहित, जलने निहित तरङ्ग रेखाङ्कित और भङ्गिमायुक्त क्षौम वस्त्र के सदृश शुभ्र, सिकताराशि (बालू का ढेर) को देख अर्जुन बहुत प्रसन्न हुये ॥ ६ ॥

तत्रस्थितां शालिगोप्त्रीं वर्णयति—

मनोरमं प्रापितमन्तरं भ्रुवोरलङ्कृतं केसररेणुनाणुना ।
अलक्तताम्राधरपल्लवश्रिया समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम्।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरौधसः ॥ १० ॥

उपारता इति। पश्चिमा चासौ रात्रिश्चेति विशेषणसमासः। अपररात्र इत्यर्थः। "पूर्वा दिक्पश्चिमं नभः" इत्यादिवदेकदेशिशब्दस्यैकदेशशब्दसामानाधिकरण्यादेकदेशे पर्यवसानम्, न तु पश्चिमं रात्रेरित्येकदेशिसमासः। तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणात्। अत एव 'अहःसर्वैकदेश-' इत्यादिना न समासान्तोऽपि। तस्यापि पूर्वापरादिसूत्रोक्तसमासविषयत्वादिति। प्रकाशवर्षस्तु एकदेशिसमासमेवाश्रित्य समासान्तमाह, तन्मृग्यम्। गावश्चरन्त्यत्रेति गोचरो गवां चरणस्थानं वनम्। पश्चिमरात्रौ यो गोचरस्तस्मादुपारताः सन्निवृत्ता जवेन गां भुवं पतितुं धावितुमपारयन्तोऽशक्नुवन्तः प्रस्नुतपीवरौधसो वत्सस्मरणात्स्रवत्पीनापीनाः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। 'ऊधसोऽनङ्' इति स्त्रीग्रहणं कर्तव्यमिति नियमान्नानङादेशः। उत्सुका वत्सेषूत्कण्ठिता गवां गणास्तमर्जुनमवेक्षणोत्सुकं दर्शनकाङ्क्षं चक्रुः। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्युभयत्राप्यमरः। अत्र स्वभावोक्तिरलङ्कारः—'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्' इति लक्षणात् ॥ १० ॥

गायें रात के पिछले पहर में चरागाह से लौटते समय, वेग से पृथ्वी पर दौड़ नहीं सकती थीं क्योंकि वे अपने २ बच्चों का स्मरण करके उत्कण्ठित हो गईं थीं जिसके कारण उनके पीन पयोधरों से (भरे २ थनों से) दूध बह रहे थे। वे अर्जुन को अपनी तरफ देखने में समुत्कण्ठित कर दीं (अर्थात् उन्हें देखने के लिये अर्जुन को प्रबल लालसा हुई) ॥ १० ॥

परीतमुक्षावजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम्।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम् ॥ ११ ॥

परीतमिति। सोऽर्जुन उक्षावजये उक्षान्तरभङ्गे सति जयश्रिया परीतं वेष्टितमुच्चैर्नदन्तं क्षतसिन्धुरोधसं रुग्णसरित्तटं शरदि भवां शारदीं पुष्टिमवयवोपचयं दधतं गवामधिपं महोक्षं सविग्रहं मूर्तिमन्तम्। 'कायो देहः क्लीबपुंसोः शरीरं वर्ष्म विग्रहः' इत्यमरः। दर्पमिवेत्युत्प्रेक्षा। ददर्श ॥ ११ ॥

अर्जुन ने देखा—एक महान् वृषभ अन्य वृषभ के साथ युद्ध कर के उसे पराजित कर, विजय लाभ कर गम्भीर गर्जन करता हुआ नदी के तट को ढहा रहा था। वह गायों का राजा अत्यन्त हृष्टपुष्ट मानों साक्षात् दर्प महोक्ष के रूप में उपस्थित हुआ था ॥ ११ ॥

विमुच्यमानैरपि तस्य मन्थरं गवां हिमानीविशदैः कदम्बकैः।
शरन्नदीनां पुलिनैः कुतूहलं गलद्दुकूलैर्जघनैरिवादधे ॥ १२ ॥

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम् ।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरौधसः ॥ १० ॥

उपारता इति । पश्चिमा चासौ रात्रिश्चेति विशेषणसमासः । अपररात्र इत्यर्थः । "पूर्वा दिक्पश्चिमं नभः" इत्यादिवदेकदेशिसमासस्यैकदेशसमानाधिकरण्यादेकदेशे पर्यवसानम् , न तु पश्चिमं रात्रेरित्येकदेशिसमासः । तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणात् । अत एव 'अहः सर्वैकदेश—' इत्यादिना न समासान्तोऽपि । तस्यापि पूर्वापरादिसूत्रोक्तसमासविषयत्वादिति । प्रकाशवर्षस्तु एकदेशिसमासमेवाश्रित्य समासान्तमाह, तन्मृग्यम् । गावश्चरन्त्यत्रेति गोचरो गवां कवलस्थानं वनम् । पश्चिमरात्रौ यो गोचरस्तस्मादुपारताः संनिवृत्ता जवेन या भुवं पतितुं धावितुमपारयन्त्योऽशक्नुवन्त्यः प्रस्नुतपीवरौधसो यस्रवत्स्तनाः स्थूलापीनाः । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' इति स्त्रीग्रहणं कर्तव्यमिति नियमान्नानङादेशः । उत्सुका वत्सेषूत्कण्ठिता गवां गणास्तमर्जुनमवेक्षणोत्सुकं दर्शनकौतुकं चक्रुः । 'इष्टार्थोद्युक्त उत्सुकः ।' इत्युभयत्राप्यमरः । अत्र स्वभावोक्तिरलङ्कारः —'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्' इति लक्षणात् ॥ १० ॥

गायें रात के पिछले पहर में चरागाह से लौटते समय, वेग से पृथ्वी पर दौड़ नहीं सकती थीं क्योंकि वे अपने २ बच्चों का स्मरण करके उत्कण्ठित हो गई थीं जिसके कारण उनके पीन पयोधरों से ( बड़े २ थनों से ) क्षीर बह रहे थे । वे अर्जुन को अपनी तरफ देखने में समुत्कण्ठित कर दीं ( अर्थात् उन्हें देखने के लिये अर्जुन को प्रबल लालसा हुई ) ॥ १० ॥

परीतमुक्षावजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम् ॥ ११ ॥

परीतमिति । सोऽर्जुन उक्षावजये उक्षान्तरभङ्गे सति जयश्रिया परीतं वेष्टितमुच्चैर्नदन्तं क्षतसिन्धुरोधसं रुग्णसरित्तटं शरदि भवां शारदीं पुष्टिमवयवोपचयं दधतं गवामधिपं महोक्षं सविग्रहं मूर्तिमन्तम् । 'कायो देहः क्लीबपुंसोः शरीरं वर्ष्म विग्रहः' इत्यमरः । दर्पमिवेत्युत्प्रेक्षा । ददर्श ॥ ११ ॥

अर्जुन ने देखा—एक महान् वृषभ जो न वृषभ के साथ युद्ध कर के उसे पराजित कर, विजय लाभ कर गम्भीर गर्जन करता हुआ नदी के तट को ढहा रहा था । वह गायों का राजा अत्यन्त हृष्टपुष्ट मानों साक्षात् दर्प महोक्ष के रूप में उपस्थित हुआ था ॥ ११ ॥

विमुच्यमानैरपि तस्य मन्थरं गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं गलद्दुकूलैर्जघनैरिवादधे ॥ १२ ॥

उन गोपियों के मुखमण्डलपर बिखरे ( विथुरे ) [redacted] केश कलाप भ्रमरों की तरह दिखाई पड़ते थे। मन्द हास से पुष्प पराग की तरह दशन पंक्तियाँ दिखलाई पड़ती थीं, हिलते हुवे कानके कुण्डलों की दीप्ति से उनका मुख मण्डल चमक रहा था और प्रभात काल के सूर्य्य की किरणों से विकसित कमल की शोभा को प्राप्त हो रहा था। ( इस श्लोक में मुख की उपमा कमल से दी गई है। दाँत को कमल का केशर माना गया है। ग्वालिनियों के केश को कमल पर घूमने वाले भ्रमर की उपमा दी गई है ) ॥ १४ ॥

निबद्धनिःश्वासविकम्पिताधरा लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्तितत्रिका विकर्षणैः पाणिविहारहारिभिः ॥ १५ ॥

निबद्धेति । निबद्धेनावरुद्धेन निःश्वासेन विकम्पिता अधरा यासां तास्तथोक्ताः । अतएव प्रस्फुरितैकपल्लवा । प्रचलितैकपल्लवा इत्यर्थः । 'कचित्तस्याप्यदन्तस्य वृत्ति विषये वीप्सार्थस्य सप्तपर्णोविषय' इति कैयट । लता इव स्थिताः । दैवादेकपल्लव स्फुरणस्यापि लोके सम्भवादुपमेवेयं नोत्प्रेक्षा । किञ्च । व्यपोढानि विपरीतानि पार्श्वानि येषु तैः पाणिविहारहारिभिः पाणिविक्षेपमनोहरैः । 'भङ्गहारोऽङ्गविक्षेप' इत्यमरः । विकर्षणैर्मन्थगुणाकर्षणैरपवर्तितत्रिका सवलितनितम्बा । यद्यपि 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः, तथाप्यत्र नितम्बो लक्ष्यते तन्नैकटयादिति भावः ॥ १५ ॥

दधि मन्थन कार्य्य में लगी हुई उन ग्वालिनियों के होठ ( अधर ) श्वास के रुक जाने से प्रकम्पित हो रहे थे, जिससे वे, उस लता के सदृश मालूम पड़ती थीं जिसका एकाही पत्ता किसी तरह हिलगया हो। हाथों से मन्थन के दण्ड के सञ्चालन से उनका पार्श्व प्रदेश विवृत दिखलाई पड़ रहा था। और उनके नितम्ब भी झुकाव रहे थे ॥ १५ ॥

व्रजाजिरेष्वम्बुदनादशङ्किनीः शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥ १६ ॥

व्रजेति । व्रजाजिरेषु गोष्ठप्राङ्गणेषु । अधिकरणे सप्तमी । 'व्रजो गोष्ठाध्ववृन्देषु' इति विश्वः । अम्बुदनादशङ्किनीर्गर्जितभ्रमवतीरिति भ्रान्तिमदलङ्कारः । शिखण्डिनां योषितो मयूरीः । योषिद्ग्रहणं मौग्ध्यातिशयार्थम् । उन्मदयत्सून्मदाः कुर्वत्सु । 'तत्करोति—' इति ण्यन्ताच्छतृप्रत्ययः । मथां मन्थनदण्डानाम् । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । विवर्तनैः परिभ्रमणैर्मुहुः प्रणुन्नेषु कम्पितेष्विति स्वभावोक्तिः । कुम्भेषु कलशेषु मृदङ्गवन्मन्थरं मन्दं नदत्सु सत्स्विति चाधस्ताम्योक्तिः । मा वलक्षणे सप्तमीयम् ॥ १६ ॥

अहीर टोलियों में मन्थनदण्डों के घूमने से ( वे घड़े, जिनमें दधि विलोडन की जाती थी ) दधि भाण्ड मृदङ्ग के सदृश मधुर ध्वनि करते हुवे, मयूरियों को मेघ गर्जन का भ्रम उत्पन्न कर उन्मादित कर रहे थे ॥ १६ ॥

अत एवाश्रमेषु मुनिस्थानेषु ये मण्डपास्तदुपमा । 'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः । सपुष्पहासा पुष्पविकाससहिता । 'तेन सह—' इत्यादिना बहुव्रीहिः । निवेशवी-रुधो गृहगुल्मिनी । 'वीरुधो गुल्मिन्युलपः' इति वैजयन्ती । स्नेहात् सादरं ददर्श । उपमाऽलङ्कारः ॥ १९ ॥

जाते समय मार्ग में जो २ ग्राम पड़ते थे, अर्जुन ने उनका निरीक्षण किया । गाँव के प्रत्येक घरों के लता कुञ्ज, जिनमें पुष्प विकसित होरहे थे और लता कुञ्ज ग्रामनिवासियों से, ( जिनके, आचार, विचार, वेष भूषा तथा हाव और भाव सब व्यक्त थे ), अधिष्ठित होकर मण्डप के समान सुन्दर प्रतीत होते थे ॥ १९ ॥

ग्राम निवासियों से अधिष्ठित थे, आश्रम में बने हुए मण्डप की शोभा धारण कर रहे थे । जन ( ग्राम निवासियों ) के कर्म शुद्ध थे । उनके भाव, वेश और आभरणादि उनकी कर्म के द्योतक थे, उन्हें अर्जुन ने बार २ अवलोकन किया ॥ १९ ॥

ततः स सम्प्रेक्ष्य शरद्गुणश्रियं शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमचोदितोऽपि गां न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ २० ॥

तत इति । ततः स पूर्वोक्तो यक्षः शरद्गुणश्रियं सम्प्रेक्ष्य । दर्शनीयाः दर्शनीयाश्च विचार्येत्यर्थः । शरद्गुणालोकने लोलचक्षुषं सतृष्णदृष्टिम् । 'लोलश्चलसतृष्णयोः' इत्यमरः । तमर्जुनमचोदितोऽप्यपृष्टोऽपि गां वाचमुवाच । तथाहि । इङ्गितज्ञो भावज्ञः । 'इङ्गितं हृद्गतो भावः' इति विश्वः । अवसरे उचितयोग्ये काले नावसीदति न बाधं प्राप्नोति । 'अपृष्टः कस्यचिद् ब्रूयात्' इति निषेधस्यकालविदोऽविषयत्वमिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २० ॥

उस यक्ष ने शरत्काल के गुणों की शोभा देख कर, शरत्काल की शोभा देखने में सतृष्ण नेत्र, अर्जुन से बिना कुछ पूछे ही बोला क्योंकि अभिप्राय का ज्ञाता व्यक्ति समय पर कभी नहीं चूकता । अर्थात् यक्ष अर्जुन के मनोगत भाव को समझ कर उससे वार्तालाप करने के लिये कुछ कहा ॥ २० ॥

इयं शिवाया नियतेरिवायतिः कृतार्थयन्ती जगतः फलैः क्रियाः ।
जयश्रियं पार्थ ! पृथूकरोतु ते शरत्प्रसन्नाम्बुरनम्बुवारिदा ॥ २१ ॥

इयमिति । हे पार्थ, शिवायाः कल्याणकारिण्या नियतेः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । शुभावहदैवस्यायतिः फलदानकाल इव जगतः क्रियाः कृष्यादिकर्माणि फलैः सस्यैः । 'कामो निष्पत्तिभोगेषु बीजभावे धने फलम्' इति वैजयन्ती । कृतार्थयन्ती सफलयन्ती प्रसन्नाम्बुर्निर्मलोदकाऽनम्बुवारिदा निर्जलमेघा । अनेन विशेषणद्वयेन यात्राप्रतिबन्धोराहित्यं सूचयति । इयं शरत्ते जयश्रियं पृथूकरोतु । आशीरर्थे लोट् ॥ २१ ॥

विपाण्डुभिरिति ॥ कदम्बानिलशब्देन वर्षर्तुरुपलक्ष्यते। स एव भर्ता तदपाये विरहे म्लानतया निर्जलतया दुर्बलतया च विपाण्डुभिस्त्युतानि रहितान्यचिराभासुणा विद्युल्लता एव हेमदामानि सुवर्णसूत्राभरणानि येभ्यस्तैः पयोधरैस्तमोदैः, अन्यत्र स्तनैः। उपलक्षितानाम्। 'स्तनाम्भोदौ पयोधरौ' इति वैजयन्ती। दिशा एव वधूस्तासामिव कृशता न शक्यत इति च। किंतु शक्यत एव वियुक्तत्वात्। 'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा' इति स्मरणादिति भावः। सामान्यतः प्रसक्तमर्हान कार्श्यस्यैकेन नञा सम्भाव्य द्वितीयेन निषेधति। यथाह वामनः—'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति। अत्र रूपकालङ्कारः स्फुट एव ॥ २४ ॥

वर्षाऋतु रूप पति के चले जाने पर, उन दिक् सुन्दरियों की कृशता (दुर्बलता) निर्जलता रूप खिन्नता से विद्युल्लता रूप सुवर्ण सूत्र विनिर्मित भूषणों से रहित होकर भी मेघ रूप स्तनमण्डलों से क्या नहीं सुशोभित होती है? किन्तु सुशोभित होती है। (इस पद्य में कवि वर्षाऋतु को पति माना है, दिशाओं को स्त्री माना है और मेघ को स्तन माना है बिजली को सुवर्ण का आभूषण माना है। अर्थात् पति के विरह में स्त्रियाँ दुर्बल हो जाती हैं, उपभोग के कारण स्तन म्लान हो जाते हैं और वर्ण पयोधर मण्डल से, जिन पर स्वर्ण के आभूषण भी न हों, स्त्रियों की खिन्नता भी उनको शोभा की वृद्धि करती है

इसी तरह इस शरद्‌ऋतु में भी वर्षा ऋतु के बीत जाने पर निर्जल मेघ जो थोड़ी पीली सी किये चमक रहा है है और उनकी बिजली की चमक समाप्त हो गई है अब उन से दिशायें सुशोभित नहीं होती है ऐसा नहीं उनकी शोभा और बढ गई है)। ॥ २४ ॥

**विहाय वाञ्छामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः।**
**श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ २५ ॥**

विहायेति। मदात्ययान्मदव्यपायादरक्तकण्ठस्यासंपन्नस्वरस्य। कण्ठशब्देनात्र लक्षणया स्वरो लक्ष्यते। शिखण्डिनो मयूरस्य सर्वजनानुदितं उत्पन्नेऽतरे रुते कूजिते वाञ्छा विहाय। श्रुतिः श्रोत्रम्। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। उन्मदहंसानि स्वनं मत्तमरालकूजितं श्रयन्ति भजते। सन्नकाण्डे परिचितपरिहारेणापरिचिते कथं प्रीतिरुदय इत्याशङ्कयार्थान्तरं न्यस्यति—गुणा इति। प्रीणातीति प्रियः। 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। प्रियत्वे प्रीतिकरत्वे गुणा अधिकृता नियुक्ताः। संस्तवः परिचयो नाधिकृतो न समर्थः। प्रेमायाने गुणवत्त्व प्रयोजकं न परिचय इत्यर्थः॥

इसमें (शरद्‌ऋतु में) वर्षा काल के बीत जाने पर मयूरों (मोर) का मद क्षीण हो जाता है अतः उनकी वाणी कम मधुर प्रतीत होती है जब कभी इस ऋतु में ये बोलते हैं तब कान उससे निस्पृह हो उन्मत्त हंसो की ध्वनि श्रवण करते हैं। मन के प्यारे होने में गुण ही कारण है जिसमें अधिक गुण होगा वही प्रिय होगा चिरपरिचित कोई वस्तु नहीं है ॥ २५ ॥

पत्राणि पर्वसु येषां ते वृक्षा सप्तपलाशा । 'क्वचित्सङ्ख्यावाक्कस्य वृत्तिविषये वीप्सा यथैवं सप्तपर्णादि' दित्युक्तम् । तेषां पुष्पाणि सप्तपलाशानि । द्विहीन प्रसवे सर्वस्' इत्यमरः । 'फले लुक्' इत्यणो लुक् । तेषु जात सप्तपलाशज रजः परागं सन्ध्यानुसुतरीयमिव । 'सन्ध्यानुसुरीय च' इत्यमरः । निरुन्धतीनिवारयन्ती । प्रावृतवतीरिति यावत् । अनाविलान्यकलुषाण्युन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषीव यासां तास्तथोक्ता । 'नीलस्सवर्णगलो दासी बाण ओदनपाक्यपि' इति धन्वन्तरिः । पुष्पाणि हासा इव तैः सह वर्तन्त इति सपुष्पहासा । वनराजयो योषित इव वनराजियोषित । ता अपविद्धयेरवन्यव । अत्र सन्ध्यानमिवेत्युपमेयानामुत्प्रेक्षमितसमासे विरुम् । यथा कार्त्तिकेनांशुकामुकेमापिव स्वनामुक निरुन्धे तद्वदिति भावः ॥ २८ ॥

वन राजियाँ कामिनी रूप हैं । उनके विकसित पुष्प ( कामिनियों के ) हास्य के समान हैं । इन वन राजियों में बाण वृक्ष ( कट सरैया ) निर्मल खुली हुई आँखों के सदृश हैं । सात सात पत्तों से युक्त छितौन का पराग पाण्डु वर्ण के अञ्चल के सदृश है । जब वे हवा के झोंके से उड़ने लगते हैं तो स्त्रियाँ उन्हें सम्हालने लग जाती हैं । जिस प्रकार कामिनियाँ मन्द हास करती हुई अपने निर्मल नेत्रों से अवलोकन करती हैं और उनका बसन्ती रंग का अञ्चल हवा के झोंके से उड़ता रहता है । और वे उसे सम्हालने लग जाती हैं । उसी तरह ये वन पंक्तियाँ फूलों के भार से भरी हुई हैं । [redacted] में फूले हुये कट सरैया ( बाण ) के फूल और छितौन के जो वृक्ष हैं ( छितौन के पेड़ के हर एक डन्ठी में सात २ पत्ते होते हैं । छितौन के पराग हवा के झोंके से उड़ रहे हैं उस समय इन ( वन राजियों के ) वृक्ष भी हवा के झोंके से झकोरे ले रहे हैं ॥ २८ ॥

अदीपितं वैद्युतजातवेदसा सिताम्बुदच्छेदतिरोहितातपम् ।
ततान्तरं सान्तरवारिसीकरैः शिवं नभोवर्त्म सरोजवायुभिः ॥ २९ ॥

अदीपितमिति । वैद्युतजातवेदसा वैद्युताग्निनाऽदीपितमप्रकाशितम् । विद्युत्प्रकाशस्य दृष्टिविघातकत्वात्तद्रहितं शुभ इति भावः । सिताम्बुदानां छेदैः खण्डैस्तिरोहितातपम् । न दृष्टिबाधो नाप्यातपबाध इति भावः । सान्तरवारिसीकरैर्विरलाम्बुकणैस्ततान्तरं व्याप्तमध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म चापदिति । स्वभावोक्तिरलङ्कारः ॥ २९ ॥

आकाश मार्ग विद्युताग्नि से उद्भासित नहीं हो रहे हैं । और शुभ्र बादलों के खण्डों से सूर्य का आतप भी छिपा हुआ है । (जिससे आकाश मार्ग में चलने से न तो आँखें चकाचौंध होती हैं और न धूप ही सताती है ) आकाश का अन्तराल विरल २ जल कणों से व्याप्त हो रहा है । कमलों की सुरभित वायु से आकाश पथ बहुत रमणीय हो गया है ॥ २९ ॥

सितच्छदानामपदिश्य धावतां रुतैरमीषां ग्रथिता पतत्रिणाम् ।
प्रकुर्वते वारिदरोधनिर्गताः परस्परालापमिवामला दिशः ॥ ३० ॥

गवा समिति संहतिः । मन्त्रैर्ऋग्यजुःसामादिभिः । 'मन्त्रो ऋगादिगुह्योक्ति—' इति वैजयन्ती । सहिता योजिताहुतिरिव । समग्रां द्युतिमुपैति । आहुतिरपि जगत्प्रसूतिर्जगदेकपावनी च । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।' इति स्मरणादिति भावः ॥ ३२ ॥

संसार की रक्षा करने में समर्थ, दुनियाँ को अपवित्रता से शुद्ध करने वाली गायें अपने बछड़ों के संग गोष्ठ ( गोशाला ) के समीप खड़ी थीं । उनका झुण्ड ( अपनी पूर्ण शोभा के साथ ) ऋक्, यजु, और सामादि मन्त्रों से युक्त हव्यादि प्रक्षेप रूप आहुति ( जो संसार के रक्षा में समर्थ और संसार को पवित्र करने वाली है ) की तरह, अपनी पूर्ण शोभा को प्राप्त होता है ॥ ३२ ॥

कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने ।
इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥ ३३ ॥

कृतेति । जितबर्हिणध्वनौ । केकानुकारिणीत्यर्थः । एतेन षड्जस्वरप्राय गायन्तीति गम्यते । यथाह मातङ्गः—'षड्जं मयूरो वदति' इति । गाः पान्तीति गोपाः तेषां भार्या गोप्यः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । 'पुंयोगादाख्यायाम्' इति ङीष् । ता एव जनः । सुरक्तो मधुरकण्ठो यो गोपीजनो बल्लवीजनस्तस्य गीतनिःस्वने गाने कृतावधानमेकाग्रचित्तमिदं पुरोवर्ति मृगीकदम्बकं कर्तृ भूयसीमतिमहतीं जिघत्सामत्तुमिच्छाम् । अदेः सन्नन्तादप्रत्ययः । 'लुङ्सनोर्घस्लृ' इति घस्लादेशः । अपहाय हित्वा सस्यं नाभ्येति नोपैति । गीतासक्त्या क्षुधामपि न गणयतीत्यर्थः ॥ ३३ ॥

अर्जुन ने देखा—हरिणियों का झुण्ड, मयूरों का षड्ज ध्वनि को जीतने वाली ( मधुर-कण्ठ-गोपियों के गान में दत्त चित्त होकर अधिक खाने की इच्छा से विरत हो घास चरना भूल गया है ( अर्थात् गीत में आसक्त हरिणियाँ भूख प्यास को भी भूल गई हैं ) ॥ ३३ ॥

असावनास्थापरयावधीरितः सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन्कलमः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ॥३४॥

असाविति । शिरसाऽग्रेण मूर्ध्ना च नमन्नप्यनास्थया दरपरया सरोरुहिण्यावधीरितोऽवज्ञातः । अम्भसा सह । सहभूतेनेति भावः । शुष्यन्नसौ कलमः शालिविशेषः । मनोभुवा तप्त इव कामार्त इव । अभिपाण्डुतामुपैति । अत्रानास्थापरयेति प्रकृतसरोरुहिणीविशेषणसामर्थ्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिः । असिद्धमात्राया सरोरुहिण्या प्रतीयमानया नायिकया शुद्धभेदेऽप्यभेदलक्षणातिशयोक्तिमहिम्नावधीरणक्रियासम्बन्धाभिर्वहन्ती मनोभुवा तप्त इवेत्युत्प्रेक्षानिर्वाहिकेत्यतिशयोक्त्यनुप्राणितसमासोक्त्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

इतीति । तत्र तस्मिन्पूर्वोक्ते यक्ष इतीत्थं कथयति सति नातिदूरादनतिदूरात्। ईषद्दूर इत्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । पिहितोऽपवारितोऽर्कमण्डलस्ति- रोहितार्कमण्डल इत्यौपम्योक्तिः । नगाधिराजो हिमाद्रिर्विगलितो जलभारो येषां ते तथोक्ताः अतएव शुक्लभासः । द्वयोरन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः । सेषां विगलितजलभारशुक्लभासां शुभ्राणामम्बुमुचां निचय इव मेघवृन्दमिव ददृशे दृष्टः ॥

इस तरह वार्तालाप करते हुये ( यक्ष ) ने सन्निकट से, भगवान् भास्कर के मण्डल को तिरोहित करनेवाला पर्वत राज हिमालयको उन मेघों के समूह के सदृश देखा जिनके जलभार परित्याग करने से वर्ण शुभ्र हो गये हैं ॥ ३७ ॥

समतनुवनराजिश्यामितोपत्यकान्तं नगमुपरि हिमानीगौरमासाद्य जिष्णुः ।
व्यपगतमदरागस्यानुसस्मार लक्ष्मीमसितमम्बरवाससो बिभ्रतः सीरपाणेः ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये चतुर्थः सर्गः ।

---

समितिं । जिष्णुरर्जुनोऽतनुभिर्महतीभिर्वनराजिभिः श्यामिता श्यामला उपत्य- कान्ता आसन्नभूमिप्रदेशा यस्य तं तथोक्तम् । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । उपरि हिमानीभि- र्हिमसङ्घातैर्गौरं शुभ्रं नगं हिमाद्रिमासाद्य । व्यपगतो निवृत्तो मदरागो यस्य तस्य । असितं नीलमम्बरं वासः उत्तरीयं बिभ्रतो वहतः । सीरं हलं पाणौ यस्य तस्य सीर- पाणेर्हलायुधस्य । 'हलायुधः । नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । सङ्क- र्षणः सीरपाणिः' इत्यमरः । 'सप्तमीविशेषणे—' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तः' इति सप्तम्याः परनिपातः । लक्ष्मीं शोभामनुस- स्मार स्मृतवान् अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात्स्मरणालङ्कारः 'सदृश सदृ- शानुभवादन्यस्मरणम्' इति विद्याधरः ॥ ३८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्य- व्याख्यायां-घण्टापथसमाख्यायां चतुर्थः सर्गः समाप्तः ।

---

सुन्दर विस्तृत वनों की पंक्तियों से नील वर्ण के उपत्यका ( पहाड़के समीपकी नीची भूमि ) प्रदेश से घिरे हुये, बर्फ के चट्टानों से ढके हुये शुभ्र हिमालय पर पहुँच कर, अर्जुन को हाला के राग से मुक्त, नीलाम्बरधारी, सीरपाणी बलभद्रजी की शोभा का स्मरण हो आया ॥ ३८ ॥

॥ चतुर्थः सर्गः समाप्तः ॥

क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः ।
प्रथयितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥

क्षितीति । परस्परेऽन्योन्ये । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः' इति वक्तव्या त्परशब्दस्य द्विर्भावः । 'समासवच्च बहुलं यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य' इति वक्तव्यात्प्रथमैकवचनम् । सुट् । कस्कादित्वाद्विसर्जनीयस्य सत्वम् । बहुवचनं चान्योन्यशब्दवत् । यथा माघे—'अन्योन्येषां पुष्करैरामृशन्तः' इति । अदृष्टाः परस्परे यैस्तेऽदृष्टपरस्परास्तैस्तथोक्तैः । क्षितौ नभसि सुरलोके च निवसन्तीति तैस्तथोक्तैः । भूर्भुवःस्वर्लोकवासिभिरित्यर्थः । कृतनिकेतं कृतास्पदम् । अतएव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुमभिनिर्मितं जगतां प्रतिनिधिं प्रतिकृतिमिव स्थितमित्युत्प्रेक्षा । 'प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः । त्रैलोक्यशलाकोपममपरिच्छेद्यं चेति भावः ॥ ३ ॥

पृथ्वी, आकाश तथा स्वर्ग लोक के निवासी एक दूसरे से अदृष्ट होकर इस हिमालय पर निवास करते हैं। अतः मालूम पड़ता है कि शङ्कर भगवान् ने अपने बल के प्रचार के लिये संसार भर का प्रतिनिधि इसे ( हिमालय को ) बनाया है ॥ ३ ॥

भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना ।
समुदितं निचयेन तडित्वतीं लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

भुजगेति । पुनश्च । भुजगराजसितेन शेषाहिधवलेन नभः श्रिता गगनस्पृशा कनकस्य राजिभी रेखाभिर्विराजिताः सानवो यस्य तेन तथोक्तेन । अतएव तडित्वतीं शरदम्बुदसंहतिं शारन्मेघचयं लघयता लघूकुर्वता । तिरस्कुर्वतेत्यर्थः । अत एवोपमालङ्कारः । निचयेन शिखरसमूहेन समुदितं समुन्नतम् । निचयेनेति । यद्यपि निचयशब्दः शिखरस्यावाचकस्तथापि पर्वतवर्णनप्रकरणोक्तत्वात्तत्पर्याय इव' प्रकरणात्तद्वाची भवितुमर्हति । यथा—'कूटोऽस्त्री शिखरं शृङ्गम्' इति कूटशब्दः समूहापरपर्यायः । अतएव लक्षणाप्रमाणीया । अतएवावाच्यवचनं न दोषः ॥ ४ ॥

इसका ( हिमालय का ) गगनचुम्बी, शेषनाग के समान शुभ्र और सुवर्ण रेखाओं से सुशोभित शिखर समूह इतना ऊँचा है कि वह विद्युल्लतासे युक्त शरद् कालके मेघमालाओं को अपने औन्नत्य से तिरस्कृत कर रहा है ॥ ४ ॥

मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

मणीति । पुनः । मणिमयूखचया अंशुकानीव पताकादीनीव तैर्भासुराः । सुरवधूभिः परिभुक्ता लता गृहा इव यासु तास्तथोक्ताः । उच्चानि शिलान्तराणि गोपुरा-

इस हिमालय पर बहुत सी नदियाँ हैं। उनके तट अनेक रत्नों की खानि हैं। वे हाथियों के द्वारा ध्वस्त कर के समस्थल बना दिये गये हैं, देखने में बहुत सुन्दर हैं। इसलिये स्नान मज्जनादि अनेक विध कार्य्यों के लिये ये नदियां हितकारिणी हैं। इनका जल अत्यन्त पवित्र है। इनमें कमल विकसित हो रहे हैं। ऊँचे से नीचे की तरफ बहने के कारण इन नदियों का प्रवाह प्रखर ( तीव्र ) है। ( इस तरह की नदियों को यह हिमालय धारण करता है )॥७॥

नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

नवेति । द्रुतम् । नवानि विनिद्राणि विकसितानि च यानि जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विष इव त्विषो येषां ते तेषाम् । 'ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका' इति शाश्वतः । द्युतिमतां महाश्मनां मणीनाम् । पद्मरागाणामित्यर्थः । विशेषणसामर्थ्यात् । निकरेण समूहेन हेतुना क्वचिन्निचिताः सङ्घटिताः काञ्चनभित्तयो येषु तेषु सानुषु विहिता सान्ध्या सन्ध्यासम्बन्धिनो मयूखा यस्मिंस्तमिव स्थितम् । काञ्चनभित्तिषु पद्मरागप्रभाप्रसरात्संवलितसन्ध्याराग इवाभातीत्युत्प्रेक्षा ॥ ८ ॥

इस हिमालय पर अभिनव विकसित जपाकुसुम पुष्प के समान ( अरुण ) कान्ति युक्त पद्मरागादि महामणियाँ विराज रही हैं। प्रकाशित होते हुए इन महा मणियों के समूह से खचित होकर हेममय शिखरों पर सायं काल की किरणों के सदृश परिस्फुरण करती हुई किरणों को यह हिमालय धारण करता है। ( सूर्य्य की किरणें सायङ्काल को पीला और लाल वर्ण मिश्रित दिखलाई पड़ती हैं उसी तरह हिमालय सुवर्ण का पीला और पद्म राग का अरुण प्रकाश दोनों के एकत्रित होने के कारण सायङ्कालीन द्युति धारण करता है॥ ८॥

पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम् ॥ ९ ॥

पृथ्विति । द्रुतम् । पृथुभिः कदम्बकैः कदम्बकनीपकुसुमसमूहै राजितम् । 'कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके' इत्युभयत्रापि विश्वः । ग्रथितमालैर्बद्धपङ्क्तिभिस्तमालवनैस्तापिच्छवनैराकुलमाकीर्णम् । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । लघुतुषारमल्पशीकरं यत्तुषारजलं हिमोदकं तच्च्योतति वर्षतीति तं तथोक्तम् । 'तुषारौ हिमशीकरौ' इति शाश्वतः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनस्ते सन्त्यस्येति तं तथोक्तम् ॥ ९ ॥

यह हिमालय बड़े २ कदम्ब के पुष्पों से सुशोभित हो रहा है। यह गुथे हुवे पुष्प माल्य के सदृश तमाल के वनों से व्याप्त हो रहा है। बिन्दु बिन्दु हिमजल इस परसे परिस्रवण कर रहा है। इस हिमालय पर मदस्रावी, और सुन्दर मुख, सुमुख वाले हाथियां विचरण करते हैं॥ ९॥

इस हिमालय पर बहुत सी नदियाँ हैं । उनके तट अनेक रत्नों की खानि हैं । वे हाथियों के द्वारा क्षत कर के समस्थल बना दिये गये हैं, देखने में बहुत सुन्दर हैं । इसलिये स्नान मज्जनादि अनेक विध कार्य्यों के लिये ये नदियाँ हितकारिणी हैं । इनका जल अत्यन्त पवित्र है । इनमें कमल विकसित हो रहे हैं । ऊंचे से नीचे की तरफ बहने के कारण इन नदियों का प्रवाह प्रखर ( तीव्र ) है । ( इस तरह की नदियों को यह हिमालय धारण करता है )॥७॥

नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

नवेति । पुनश्च । नवानि विनिद्राणि विकसितानि च यानि जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विष इव त्विषो येषां ते तेषाम् । 'ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका' इति वाग्भटः । द्युतिमतां महाश्मनां मणीनाम् । पद्मरागाणामित्यर्थः । विशेषणसामर्थ्यात् । निकरेण समूहेन हेतुना क्वचिन्निचिता सङ्घटिता काञ्चनभित्तयो येषु तेषु सानुषु विहिता सान्ध्या सन्ध्याकालीना मयूखा रश्मयस्तमिव स्थितम् । काञ्चनभित्तिषु पद्मरागप्रभाप्रसराद्गुदितसन्ध्यारागा इव भातीत्युत्प्रेक्षा ॥ ८ ॥

इस हिमालय पर नवीन विकसित जपाकुसुम पुष्प के समान ( अरुण ) कान्ति युक्त पद्मरागादि महामणियाँ विराज रही हैं । प्रकाशित होते हुए इन महा मणियों के समूह से सङ्घटित होकर हेमयुक्त शिखरों पर सायं काल की किरणों के सदृश परिस्फुरण करती हुई किरणों को यह हिमालय धारण करता है । ( सूर्य्य की किरणें सायङ्काल को पीला और लाल वर्ण मिश्रित दिखलाई पड़ती हैं उसी तरह हिमालय सुवर्ण का पीला और पद्म राग का अरुण प्रकाश दोनों के एकत्रित होने के कारण सायङ्कालीन द्युति धारण करता है ॥ ८ ॥

पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं धृतसदाननदाननदन्तिनम् ॥ ९ ॥

पृथ्विति । पुनश्च । पृथुभिः कदम्बकानां कदम्बकैर्नीपकुसुमसमूहै राजितम् । 'कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके' इत्युभयत्रापि विश्वः । ग्रथितमालैर्बद्धपङ्क्तिभिस्तमालवनैस्तापिञ्छवनैराकुलमाकीर्णम् । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । लघुतुषारमल्पशीकरं यत्तुषारजलं हिमोदकं श्च्योतति वर्षति तं तथोक्तम् । 'तुषारौ हिमशीकरौ' इति शाश्वतः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । सदाना समदाः सदाननाः शोभनाननाश्च ये दन्तिनस्ते धृता येन तं तथोक्तम् ॥ ९ ॥

यह हिमालय बड़े २ कदम्ब के पुष्पों से विशोभित हो रहा है । यह गुंथे हुवे पुष्प माल्य के सदृश तमाल के वनों से व्याप्त हो रहा है । बिन्दु बिन्दु हिमजल इस परसे परिस्रवण कर रहा है । इस हिमालय पर मदस्रावी, और सुन्दर शुण्ड, मुखवाले हाथियां विचरण करते हैं ॥ ९ ॥

सूचितं ज्ञापितमम्बुमुचां चयमविरतमुपविज्ञातम् । अत्र किल कवि इत्याचित्र-खरमेघसन्देहो मेघनिश्चयान्त. सन्देहालङ्कार ॥ १२ ॥

हिमालय के शिखर अनेक मणियों की प्रभा से रंजित रहने के कारण तथा बर्फ से ढके होने के कारण शुभ्र दिखलाई पड़ते हैं । उन पर मेघमण्डल भी धवल वर्ण तथा इन्द्र धनुष के संग होता हुआ व्यक्त नहीं हो पाता है जब कभी वह गम्भीर गर्जन करता है तब स्पष्ट हो जाता है कि हिमालय के शिखर पर मेघ भी है ॥ १२ ॥

विकचवारिरुहं दधतं सरः सकलहंसगणं शुचि मानसम् ।
शिवमगात्मजया च कृतेर्ष्यया सकलहं सगणं शुचिमानसम् ॥ १३ ॥

विकचेति ॥ पुनश्च । विकचवारिरुहम् । नित्यविकसितारविन्दमित्यर्थः । इतिशा समर्थात् । कलहंसगणैः सह वर्तत इति सकलहंसगणम् । 'कादम्ब. कलहंस स्यात्' इत्यमर । यद्वा । सकला सर्वे हंसगणा यस्मिंस्तत्तथोक्तम् । शुचि नित्यनिर्मलं मानस मानसाख्यं सरो दधतम् । किञ्च । कृतेर्ष्यया । कुतश्चिन्निमित्तात्कुपितयेत्यर्थः । अगात्मजया पार्वत्या सकलहं सविवादम् । सगणं सप्रमथम् । 'गणा' प्रमथसंख्यौघा.' इति वैजयन्ती । शुचिमानसमविद्याविनिर्मुक्तचित्तं शिवं च दधतम् । पुनेन कवैषम्यमस्योक्तम् ॥ १३ ॥

यह निर्मल जल युक्त, उस 'मानसरोवर' (तालाब) को धारण करता है । जिसमें कमल खिले [illegible] रहते हैं और इसमें कल हंसों का निवास है या सम्पूर्ण जाति के हंसों का निवास है । यही नहीं किन्तु किसी कारण से कुपित पार्वती के साथ, अपने प्रमथादि गणों के साथ, सम्पूर्ण अविद्याओं से निर्मुक्त अतएव शुद्ध चित्त शंकर जी को भी धारण करता है ॥ १३ ॥

ग्रहविमानगणानभितो दिवं ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥

ग्रहेति ॥ दिवमभितो दिवोऽभिमुखम् । 'अभित. परित.—' इत्यादिना द्वितीया । ग्रहाश्चन्द्रादयो विमानानि देवयानानि च । 'व्योमयानं विमानोऽस्त्री' इत्यमर । तेषां गणान्ज्वलयता प्रदीपयता । 'मितां ह्रस्व' इति ह्रस्वः । ओषधिजेन तृणविशेषजन्येन कृशानुना वह्निना कृत्वानुक्षपं प्रतिक्षपम् । वीप्सायामव्ययीभाव । उमापतिसेविन. प्रमथादीन् । 'गतिबुद्धि—' इत्यादिना द्विकर्मकत्वम् । त्रयाणां पुराणां समाहारस्त्रिपुरम् । 'तद्धितार्थ—' इत्यादिना समास । 'पात्रादिभ्य प्रतिषेधो वक्तव्य' इति स्त्रीलिङ्गप्रतिषेध । तस्य दाहं त्रिपुरदाहं मुहुरनुस्मरयन्तम् । ननु 'अधीगर्थ—' इत्यादिना दाहमित्यत्र षष्ठी किं न स्यात् । तस्या शेषार्थे विधानाच्छेषत्वस्याविवक्षितत्वात् । अत्र 'कविसम्मतसादृश्यात्स्मृति' इति स्मरणालङ्कारः ॥ १४ ॥

औपच्छन्दसिक वृत्तम्—'पर्यन्तेर्यो तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्' इति स्मरणात् ॥ १७ ॥

यवने क्षा—यह नगेन्द्र हिम धवल अपने शिखरों से मेघ मार्ग अर्थात् आकाश मण्डल को मानों असख्य भागों में विभक्त कर दिया है। दर्शन मात्र से ही यह लोगों के पाप पुञ्ज का नाश करने में समर्थ है। ॥ १७ ॥

इह दुरधिगमैः किञ्चिदेवागमैः सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः परम् ॥१८॥

इहेति ॥ इहास्मिन्पर्वते । सुतरं न भवतीत्यसुतरम् । सुदुस्तरमित्यर्थः । ततते सततमव्ययं । अन्तरं मध्यमन्तरम् । पुरुषे त्वन्तरं तत्वम् । दुरधिगमैर्दुर्बोधैरन्यत्र दुष्प्रवेशैरागमैर्वेदैरन्यत्र पुराणादिभिः । 'पुराणेऽप्यागमो वृत्ते' इति दक्ष । किञ्चिदेव सततं वर्णयन्ति न तु सम्यग्विशदरूपेणापि ति शेष अमुमध्यमध्यमादिति भाव । किंरवतिविपिनमतिगहनं दिग्व्यापिनमुभयत्रापि समम् । अमुं गिरिं परं पुरुषं परमात्मानमिव परं केवलम् । 'परमव्ययमित्कृष्ट केवले' इति विश्व । पद्मयोनिर्ब्रह्मैव वेद नान्य इत्यर्थः । 'विदो लटो वा' इति णलादेश । अत्रोपमायमकयोः संसृष्टिः । क्षमा वृत्तम्—'तुरगरसयतिर्नौ भरौ ग. क्षमा' इति लक्षणात् ॥ १८ ॥

इस (हिमालय) के दुस्तर अभ्यन्तर तत्त्व का वर्णन, दुरूह पुराणों की सहायता से थोड़ा बहुत किया जाता है। दिगन्तव्यापी, इस पर्वत को, जिसमें बहुत से घने २ जङ्गल हैं, और जो परम पुरुष भगवान के सदृश अचिन्त्य है, केवल ब्रह्मा ही जानते हैं। ॥ १८ ॥

रुचिरपल्लवपुष्पलतागृहैरुपलसज्जलजैर्जलराशिभिः ।
नयति सन्ततमुत्सुकतामयं धृतिमतीरुपकान्तमपि स्त्रियः ॥ १९ ॥

रुचिरपल्लवेति ॥ अयं गिरिः रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथाभूता लतागृहा येषु तैस्तयोर्फैरुपलसज्जलजैः शोभितकमलैर्जलराशिभिः सरोभिः करणैः उपकान्तं कान्तसमीपे धृतिमतीर्धैर्यवतीरपि समीपस्थानपि प्रियान्न गणयन्ती । मानिनीरित्यर्थः । स्त्रियः सन्ततमुत्सुकतां नयति । तासां मानग्रन्थिं शिथिलयतीत्यर्थः । अथवा । उपकान्तं धृतिमतीस्तुष्टिमतीरपि सुरततृप्ता अपि पुनरप्युत्सुकता नयतीत्यर्थः । उभयत्राप्युद्दीपकत्वात्प्रतिवार्तोक्ति । द्रुतविलम्बितं वृत्तम् ॥ १९ ॥

कोमल किसलय और पुष्पों से युक्त लताओं के कुञ्जों से, तथा कमल पूर्ण सरोवरों से सुशोभित होता हुआ, वह (हिमवान्) प्रियतम के समीप, मानिनी भी स्त्रियों को उत्कण्ठित कर देता है (अथवा रति सुख से तृप्त भी स्त्रियों को अपने २ पतियों से रमण करने के लिये बार २ लालायित कराता है) ॥ १९ ॥

तथा हि—'टाङसिङसामिनात्स्याः' इति स्यादेशबाधनात् । परत्वाज्जस्सादेशो बभाषे माप्यकृत्स्वयम् । सूत्रकारमते यत्तु ज्ञापकात्परबाधनम् । भवेत्तदपि टाङस्योर्नं पुनर्ङसि सम्भवि । मतद्वयेऽपि तत्तुल्य ङसि यत्पूर्वबाधनम् । परत्वाज्जस्सादेशस्तत्रभास्त्यादेशबाधनात् । ज्ञापकं यच्च टाङस्योर्यादेशाविनाविति । ईकारदीर्घयोस्तत्र वैयर्थ्यं तत्तु तौ विना । पुत्वे सवर्णे दीर्घे च रूपसिद्धिर्भवेत्ततः । अर्थवत्त्वात्परत्वाच्च ज्ञापकं फणी । स्यादन्यात्रजस्सादेशः स्यौ पूर्वस्य बाधनात् । समर्थनमपव्यस्तु भाष्यकैयटयोः स्फुटः ॥' एवं च यज्ञ आस इति केषाञ्चित्पाठान्तरकल्पनं तदज्ञानविजृम्भितमेव । ब्रह्मण परमात्मनः सम्बन्धि परमुत्कृष्टं श्रुचि निष्कलङ्कम् । पदं इति पदं स्थानं तावात्म्यलक्षणम् । मुक्तिमित्यर्थः । उपैतुं प्राप्तुमिच्छता मुमुक्षूणामागमा इवागमा इव । समोपहन्तीति समीपहादविद्यानिवर्तकात् । 'अपे क्लेशतमसो' इति डप्रत्ययः । इतोऽस्माद्गिरेः । भवं छिन्दन्तीति भवच्छिदः संसारनिवर्तकाः । 'सत्सूद्विष—' इत्यादिना क्विप् । भवच्छिदस्तत्साधनानि सम्यग्ज्ञानान्युत्पद्यन्ते । क्षेत्रविशेषस्यापि ज्ञानोपायत्वादित्याशयः । न केवलमियं भोगभूमिः किन्तु मुक्तिक्षेत्रमपीति तात्पर्यार्थः । श्लोकतालोपमम् । तल्लक्षणम्—'सादृश्यादिह यथोक्तस्वा क्यौ' इति ॥ २२ ॥

ब्रह्म और परा रहित, पवित्र, और सर्वोत्तम मोक्ष धाम के चाहने वालों के लिये, ज्ञान-निवर्तक शास्त्र की तरह इस हिमालय से संसार के बन्धन से मुक्त हो जाने की सद्बुद्धि उत्पन्न होती है । अर्थात् यह मुमुक्षुओं के लिये शास्त्र का काम करता है । जैसे शास्त्र के अध्ययन से बुद्धि का झुकाव मोक्ष की तरफ हो जाता है वैसे ही इस पर निवास मात्र से बुद्धि सन्मार्ग का अवलम्बन करती है ॥ २२ ॥

दिव्यस्त्रीणां सचरणलाक्षारागा रागायाते निपतितपुष्पापीडाः ।
पीडाभाजः कुसुमचिताः साशंसं शंसन्त्यस्मिन्सुरतविशेषं शय्याः ॥ २३ ॥

दिव्येति । अस्मिन्गिरौ । चरणलाक्षारागैः सह वर्तन्त इति सलाक्षारागाः । चेष्टाकृतमर्दनेषु स्त्रियः पादतलस्पर्शात्तद्रागाङ्किता इत्यर्थः । निपतिताः भ्रष्टाः करणे स्त्रीणामधोमुखत्वाद्भ्रष्टाः पुष्पापीडाः कुसुमशेखराः यासु तास्तथोक्ताः । 'शिखास्वापीडशेखरौ' इत्यमरः । पीडाभाजो विमर्दभाजः । भग्निमत्य इत्यर्थः । अमरप्रेङ्खोलितत्वाद्धि सर्वांसकटीपरिभ्रमणसम्भवादिति भावः । कुसुमैश्चिताः कुसुमव्याप्ताः । इममार्गादिकरणेषु स्तनमुखाद्यस्पर्शाताम् अभ्यासवशाद्विस्तारात्पदर्शनात्कुसुमाचिता इत्यर्थः । दिव्यस्त्रीणां सम्बन्धिन्यः । शेरते आस्वित्ति शय्यास्तल्पानि । 'संज्ञायां समजनिषद—' इत्यादिना क्यप् । रागायाते रागोद्रेके सति च साशंसं सस्पृहं सुरतविशेषं तास्तावेकवचनम् । सुरतविशेषाविरत्यर्थः । शंसन्ति सूचयन्ति । विवृण्वन्तीत्यर्थः । अत्र लाक्षारागादिपदार्थानां सुरतविशेषशंसनं प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारो यमकेन संसृज्यते । अक्ष्यकरमालावृत्तम्—'म्भौ स्मौ

लिलाङ्गुलिना सवल्ववेदाङ्गुलिनेति सात्त्विकोद्बोधः । करेणाग्र गिराबालम्बत गृहीतवान् । अत्रातीतवृत्तान्तस्य प्रत्यक्षवदभिधानाद्भाविकालङ्कार —'अतीतानागते यत्र प्रत्यक्षवदलङ्कृते । अत्यद्भुतार्थकार्यत्वाद्भाविकं तदुदाहृतम् ॥' इति लक्षणात् । वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति तल्लक्षणात् ॥ २९ ॥

यहीं ( हिमालय ) पर शिव के लिये बहुत समय तक जल में भवानी ने तपस्साधन किया था । उस समय जब कभी अकस्मात् हरिस्फुरण करते थे तो उनके नेत्र सचकित हो जाते थे । ( आशुतोष ) शङ्कर ने भी अपने हाथ से इनके हाथ का अग्रभाग ग्रहण किया था । अनन्तर शङ्कर के हाथ की अङ्गुलियों से ओस जल के स्वेद बिन्दु टपक रहे थे ॥२९॥

येनापविद्धसलिलः स्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥

येनेति । देवासुराश्च तैर्देवासुरैः । 'येषां च विरोधः शाश्वतिकः' इति नैकवद्भावः । येषां पत्र शाश्वत एव विरोधो न सोऽन्याभाविनिवृत्तिः शाश्वतिक इत्यादि । येन मन्दराद्रिणा । मन्थदण्डीकृतेनेति भावः । अपविद्धसलिलः विक्षिप्तजलोऽत एव स्फुटनागसद्म पाताल यस्मिन्सोऽम्बुनिधिरमृत ममन्थे मथितः । मन्थनार्थमूर्मिकल्पा बहुविधाद्यमाने कर्मणि लिट् । अहिपतेः मन्थगुणीकृतस्य वासुकेरित्यर्थः । 'मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्' इति भारतवचनात् । व्यावर्तनैः वेष्टनैराहिताङ्कः कृतचिह्नः सोऽयं मन्दराद्रिः खमाकाशं व्यालिखन्व्याप्तावसानयन्निव विभाति । अत्रोत्प्रेक्षा उपादानेनैव जलेलेखोल्लेखाद्गुणगतगुणनिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥ ३० ॥

जिस मन्दर गिरि से देवता और दैत्यों ने अमृत के लिये समुद्र का मन्थन किया था । ( मन्थन करते समय ) समुद्र से जल के उछलने के कारण पाताल लोक दृष्टि गोचर हो रहा था । और वह रज्जु भूत सर्पराज ( वासुकि ) के बारम्बार विवर्तन से अङ्कित होकर इस प्रकार विभोभित हो रहा है मानों आकाश मण्डल का भेदन कर रहा है ॥ ३० ॥

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रैरानीलाभैर्विरचितपरभागा रत्नैः ।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥

नीतेति । इहाद्रावशिशिररश्मेरुष्णांशोरुस्रैर्मयूखैः । सकाशैरित्यर्थः । नीतो च्छ्रायमुच्छ्रायं नीता । विस्तारितेत्यर्थः । तथानीलाभैरसितप्रभैः रत्नैरिन्द्रनीलैर्विरचितपरभागा । सवर्णनिधानासन्नोत्कर्षैरित्यर्थः । हंस इव श्येनी श्वेतवर्णा । 'विशदश्येतपाण्डराः' इत्यमरः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति श्येतशब्दान्ङीप् । तकारस्य च नकारः । स्फटिकाना रजतानां च भित्तयस्तासां छाया कान्तिः । अह्नो मध्ये । मध्याह्नेऽपीत्यर्थः । मुहुर्ज्योत्स्नाशङ्कां ज्योत्स्नाभ्रान्ति वितरति जनयतीति भ्रान्तिमदलङ्कारः ॥ ३१ ॥

सवितुस्तासां किरणानां निकयो निकर । सहस्रमिति सङ्ख्या सहस्रसङ्ख्या ताम् । स्वनियतामिति शेष. । स्वभिव्यस्यतिक्रमतीवेत्युत्प्रेक्षा ॥ ३४ ॥

इस पर्वत पर स्फटिक मणि से परिस्फुरण कारिणी असङ्ख्य किरणें, जो आकाश पथ में सञ्चरण कर रही हैं, सामूहिक रूप से, सप्ताश्व (सूर्य) की किरणों के समूह की सहस्र सङ्ख्या को अतिक्रमण करती हुई की तरह दृश्यमान सत्य कर रही हैं ॥ ३४ ॥

उपधत्ते यस्मिन्पुरमुच्चगोपुरं पुरां विजेतुर्धृतये धनाधिपः ।
स एष कैलास उपान्तसर्पिणः करोत्यकालास्तमयं विवस्वतः ॥ ३५ ॥

उपधत्तेति । यस्मिन्कैलासे धनाधिपः कुबेरः पुरां विजेतुः शिवस्य धृतये प्रीत्यै उच्चगोपुरमुन्नतपुरद्वारम् । 'पुरद्वारं तु गोपुरम्' इत्यमरः । पुरमलकाख्यां पुरीं उपधत्ते निर्मितवान् । तत्रसन्निधानादिति भावः । स एष कैलास उपान्तसर्पिणः प्रान्त चारिणो विवस्वतः सूर्यस्याकाले प्रमितेतरकालेऽस्तमयं करोतीवेत्युत्प्रेक्षा । वस्तुत स्तु तत्कारणाभावाद्व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । साचोपान्तवर्तितयाऽस्तमयं सम्ब न्धलक्षणातिशयोक्त्युत्थापितेति विवेकः । अस्तमिति मकारान्तमव्ययम् । तस्य पञ्चा ननस्येनापशब्देन षष्ठीसमासः । वृत्तमुक्तम् ॥ ३५ ॥

जिस पर कुबेर ने त्रिपुर विजेता भगवान् शङ्कर के सन्तोषार्थ बड़े २ फाटकों से युक्त नगर निर्मित कराया था वह यही कैलास है जो समीप में सञ्चरित सूर्य भगवान् को समय के पहले ही अस्त की तरह बना देता है ॥ ३५ ॥

नानारत्नज्योतिषां सन्निपातैश्छन्नेष्वन्तः सानु वप्रान्तरेषु ।
बद्धां बद्धां भित्तिशङ्काममुष्मिन्नावानावान्मातरिश्वा निहन्ति ॥ ३६ ॥

नानेति । अमुष्मिन्कैलासेऽन्तः सानु । सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । नानारत्नज्योतिषां अनेकमणिकान्तीनां सन्निपातैर्व्यतिकरैश्छन्नेषु छादितेषु । 'वा छान्तध्वान्त—' इत्यादिना निपातः । वप्रान्तरेषु कटकान्तरेषु बद्धां बद्धामभीक्ष्णं बद्धाम् । दृढीकृतामित्यर्थः । 'नित्यवीप्सयोः' इति नित्यार्थे द्विर्भावः । नित्य- मभीक्ष्णम्' इति काशिका । एवमग्रे चैतत् । भित्तिरिति सन्देहमावानावानभीक्ष्ण- मापतन् । आकपूर्वाद्वाधातो शतृप्रत्ययः । द्विर्भावादि पूर्ववत् । मातर्यन्तरिक्षे गच्छतीति मातरिश्वा वायुः । कनिन्प्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । निहन्ति निवर्तयति वायुसञ्चारान्नित्यभावोऽवधार्यत इत्यर्थः । अतो निश्चयान्त सन्देहालङ्कारः । शालिनीवृत्तम् ॥ ३६ ॥

इस कैलाश के शिखर पर विविध रत्नों की प्रभा पुञ्ज से ढकी के अन्तराल आच्छादित होनेपर सुदृढ़ दीवाल की शङ्का उत्पन्न करते हैं । आकाश सञ्चारी वायु बार २ सञ्चरित हो भित्ति की शङ्का का विच्छेद कर देता है । ॥ ३६ ॥

उत्फुल्लेति। अस्मिन्नद्रौ वात्याभिर्वातसमूहैः। 'पाशादिभ्यो यः' इति यप्रत्ययः। अमुष्माद्दृश्यमानादुत्फुल्लस्थलनलिनीवनात्। जलपतितस्य परागस्योत्थानासम्भवात्स्थलग्रहणम्। उत्फुल्लपदमुत्फुल्लस्यैव परागसम्भवाभिप्रायम्। उद्धूत उत्थापितो वियति समन्ताद्विवर्तितः परिमण्डलितः। अन्तराले तु दण्डायमान एवेति भावः। सरसिजसम्भवः पद्मोद्भवः परागः। स्थलस्याभिप्रायेणात्र सरसिजशब्दप्रयोगो द्रष्टव्यः। कनकमयातपत्रलक्ष्मीमाधत्तेऽनुकरोति। अत्र परागस्यातपत्रलक्ष्मीसम्बन्धासम्भवात्तत्सदृशीं लक्ष्मीमिति प्रतिबिम्बेनाक्षेपादसम्भवद्धर्मसम्बन्धेयं निदर्शना। तदुक्तम्—'असम्भवद्धर्मयोगादुपमानोपमेययोः। प्रतिबिम्बक्रिया गम्या यत्र सास्यान्निदर्शना॥' इति॥ ३९॥

(यहाँ से कहा)—यह जो स्थल कमलों का वन दृष्टिगोचर हो रहा है वहाँ से पद्म पराग के वात्या (बवंडर) के द्वारा उड़ाये जाने पर आकाश मण्डलाकार बन जाता है उस समय सुवर्णरचित निर्मित आतपत्र (छाता) की शोभा का अनुकरण करने लगता है ॥३९॥

इह सनियमयोः सुरापगायामुषसि सयावकसव्यपादरेखा।
कथयति शिवयोः शरीरयोगं विषमपदा पदवी विवर्तनेषु॥ ४०॥

इहेति। इहाद्रावुषसि प्रभाते सुरापगायाः स्वर्णद्यास्तत्कूले सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा। 'यावोऽलक्तो द्रुमामयः' इत्यमरः। तथा विषमाणि न्यूनाधिकानि पदानि यस्यां सा विवर्तनेषु प्रदक्षिणक्रियासु पदवी। शिवयोः प्रदक्षिणपद्धतिरित्यर्थः। सनियमयोः सन्ध्यायाः प्रणमतोरित्यर्थः। शिवा च शिवश्च तयोः शिवयोरुमाशङ्करयोः। 'पुमान्स्त्रिया' इत्येकशेषः। शरीरयोगमर्धाङ्गसङ्घटनारूपं कथयति। सनियमयोरिति नियमविषयेऽपि विरहासहाविह विहरतः शिवाविति भावः। अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः॥ ४०॥

इस कैलास पर अत्यन्त प्रभात काल में (सुरनदी) सुरधुनी (गङ्गा) के तट पर सन्ध्या वन्दन क्रियाप्रभृत अर्धचिह्न के कारण जो उमा और शङ्कर के पद चिन्ह व्यक्त होते हैं उन में से वाम चरण रेखा महावर से रची हुई और विषमा है अर्थात् वाम पद चिन्ह रक्त वर्ण और छोटा है। दक्षिण पद चिन्ह बड़ा है। इससे यह बात स्पष्ट हो जाती है कि शिव और पार्वती अर्धाङ्गी स्वरूप हैं (शिव का वामाङ्ग पार्वती रूप है और दक्षिणाङ्ग शिव स्वरूप है)॥ ४०॥

सम्मूर्छतां रजतभित्तिमयूखजालैरालोलपादपलतान्तरनिर्गतानाम्।
घर्मद्युतेरिह मुहुः पटलानि धाम्नामादर्शमण्डलनिभानि समुल्लसन्ति ४१

सम्मूर्छतामिति। इहाद्रौ रजतभित्तिमयूखजालैः सम्मूर्छतां बहुलीभवतामा

इस शरत्काल में जब मेघमण्डल जलरहित हो कर खण्ड २ हो जाता है उस समय इन्द्र धनुष जो आकाश में प्रायः कम उदित होता है अत्यन्त सूक्ष्म और खण्डित सा दृष्टिगोचर होता है। इस कैलाश शिखर के विविध रत्नों की कान्ति उस को पूर्ण कर देती है ॥

स्नपितनवलतातरुप्रवालैरमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भोरमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

स्नपितेति। इहाद्रौ शम्भोरिन्दुलेखा। स्नपितानि सिक्तानि नवानि लतानां तरूणां च प्रवालानि यैस्तैः अमृतलवस्रुत्यामृतबिन्दुनिःस्यन्देन शालन्ते ये तैर्मयूखैः सततं सर्वकालमसितयामिनीषु कृष्णपक्षरात्रिष्वपि वनान्त ति धवलयति। अन्यत्र नैतदस्तीति व्यतिरेको व्यज्यते ॥ ४४ ॥

इस कैलास पर भगवान् शंकर के शिर स्थित चन्द्र लेखा अपनी पीयूष बिन्दु स्रावी किरणों से, जो छोटे २ वृक्ष और नूतन लताओं का सिञ्चन करती हैं, कृष्ण पक्षकी रात्रि में वनान्त प्रदेश को धवलित कर देती है ॥ ४४ ॥

क्षिपति योऽनुवनं विततां बृहद्बृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दरस्तव पितुर्दयितो जगतीधरः ॥ ४५ ॥

क्षिपतीति। अयं योऽनुवनं विततां रौचनिकीं रुचम्। सौवर्णीं कान्तिमित्यर्थः। रोचनया रक्तां रौचनिकीम्। 'कासारोचनशकलकर्दमाट्ठक्'इति ठक्। 'टिड्ढाणञ्—' इत्यादिना ङीप्। उत्तरीयवस्त्रे—'बृहती चाली बृहतिका च सा महोत्तरासङ्गमिव। द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' इत्यमरः। क्षिपति प्रसारयति। अनेका हिरण्मय्यः कन्दरा यस्य सः। हिरण्मयशब्दो 'दाण्डिनायन—' इत्यादिना निपातनात्साधु। अयम् पुरोवर्ती गिरिरित्यर्थः। तव पितुरिन्द्रस्य दयितः प्रियः। जगत्या धरो जगतीधरः। पर्वते गन्धस्य सुवर्णकोशत्व इत्यर्थः ॥ ४५ ॥

यह (इन्द्रकील) नाना प्रकार की सुवर्ण मयी कन्दरा वाली, धराधर, (पहाड़ आपके पिता इन्द्र का परम मित्र है जो अपनी सुनहली दीप्ति को खूब फैलाकर लम्बी चौड़ी चादर (उत्तरीय) के समान प्रत्येक वनों के ऊपर डाल देता है ॥ ४५ ॥

सक्तिं जवादपनयत्यनिले लतानां वैरोचनैर्द्विगुणिताः सहसा मयूखैः ।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां भासस्तडिद्विलसितानि विडम्बयन्ति ॥

सक्तिमिति। अमुत्रामुष्मिन्नद्रावनिले जवाद्वेगादिति लतानां सक्तिमन्योन्यसङ्गमपनयति सति। सहसा हठाद्वैरोचनैः सावित्रैर्मयूखैर्द्विगुणाः द्विरावृत्ताः कृता इति द्विगुणिताः। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। हिरण्मयीनां हिरण्यविकाराणाम्। 'दाण्डिनायन—' इत्यादिना निपातनात्साधु। रोधो-

सरस्य तपश्चर्यां कुरु । तपस्येति 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । तद्-न्ताद्धातोर्लोट् । न च सर्वभूतहितकारिणो मे प्रमादः किं करिष्यतीति विश्वसितव्य-मित्यर्थान्तरन्यासेनाह—हि यस्मात्प्रायेण बाहुल्येन । 'प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः' इति हेमचन्द्रः । हितमर्थं करोतीति हितार्थकरे विधौ व्यापारे सति । अन्तरायैर्विघ्नैर्विना श्रेयांसि कल्याणसुखानि । अप्राप्यानीत्यर्थः । अतएव 'शकटप-' इत्यादिना समानकर्तृकेषु तुमुन् । अप्राप्यत्वेऽपि सर्वत्र सर्वस्यापि सन्तीति भावः ॥

(यक्षने अर्जुन से कहा)—आप सम्यक् धारण करते हुए श्री व्यास मुनि के निर्देश से सद्धर्म का पालन करते हुए अर्थात् सदाचरण करते हुए सावधान होकर तपश्चर्या कीजिये । यद्यपि अनुकूल (कल्याणकारी) भाग्य होते हुए भी विघ्न बाधाओं के बिना कल्याण प्राप्त करना कठिन है । अर्थात् कल्याण प्राप्त होने में अनेक प्रकार के विघ्न उपस्थित होते हैं अतः विघ्न निवारणार्थ सदा धारण करना आपके लिये अत्यावश्यक है ॥ ४९ ॥

मा भूवन्नपथहृतस्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवा शिवां प्रसक्तिम् ।
रक्षन्तस्तपसि बलं च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥ ५० ॥

मा भूवन्निति । तवेन्द्रियाण्येवाश्वास्ते । अपथेन हरन्तीत्यपथहृतो मा भूवन् । न्मार्गगमा मा भिनीषुरित्यर्थः । 'माङि लुङ्' इत्याशीरर्थे लुङ् । सन्तापे तप क्लेशे सति शिवा शिवा साध्वीमसक्तिं प्रवृत्तिमुत्साहं दिशतु । किंचेति चार्थः लोकपाला इन्द्रादयस्तपसि विषये बलं शक्तिं रक्षन्तो वर्धयन्तः सन्तः कल्याणीं साध्वीं क्रियां मनुष्ठानमधिकफलां क्रियासुः कुर्वन्तु । करोतेराशिषि लिङ् ॥ ५० ॥

आप के इन्द्रिय रूपी घोड़े के सदृश कुमार्गगामी नहीं हैं आप की कष्टावस्था में भगवान् आत्मसाधन समर्थ उत्साह प्रदान करें । लोकपाल आप के तप साधन में शक्ति की अभिवृद्धि करते हुए आप के शोभन धर्मानुष्ठान को सफल बनावें ॥ ५० ॥

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥ ५१ ॥

इतीति ॥ प्रियार्हे राजराजभृत्य इति पूर्वोक्तम् । हितं प्रियं वचनमिति शेषः । उक्त्वा सपदि स्वकीयं धाम स्थानं गतवति सति । पृथासुतोऽर्जुनः सोत्कण्ठं सौत्सुक्यं किमपि प्रदध्यौ चिन्तयामास । तथाहि । सद्वियोगः सुजनवियोगो भृशमरतिं मनसो दुःखं सन्धत्ते । करोतीत्यर्थः । अर्थान्तरन्यासः ॥ ५१ ॥

पाण्डुनन्दन ने पहाड़ पर चढ़कर, इन्द्रकील गिरि के शिखर पर रम्य वनस्थली को साक्षात् मूर्ति धारिणी मनकी प्रसन्नता के समान देखा जो ( वनस्थली ) पुष्प सम्भार से भव नव शिखा वाले पादपों ( वृक्षों ) से कांड बोहार कर साफ सुथरा हो गई थी ॥ १७ ॥

अनुसानु पुष्पितलताविततिः फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरेस्तपसेऽधिवस्तुमचलामचलः ॥ १८ ॥

अनुसान्विति । अनुसानु प्रतिसानु । वीप्सार्थेऽव्ययीभावः । पुष्पिता सञ्जातपुष्पा लताविततयो यस्मिन्स । फलिता उरवो भूरुहा येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन्स तथोक्तः । 'विविक्तौ पूतविजनौ' इत्यमरः । अचल इन्द्रकीलो हरेस्तनयस्यार्जुनस्य तपसे तपश्चर्यार्थमधिवस्तुमधिष्ठातुम् । तुमर्थाच्च भाववचनात्-इति चतुर्थी । क्रियार्थोपपदस्य-इति तुमुन् । अचलां स्थिरां धृतिं सन्तोषमाततान । अत्रानेकविशेषणपदार्थस्य धृतिकरणहेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ १८ ॥

जिसके प्रत्येक चोटियों पर पुष्पित लताओं के वितान झूम रहे थे, और फलभार से लदे हुए विशाल वृक्षों से युक्त जाले पवित्र वनप्रदेश थे उस इन्द्रकील पर्वत ने इन्द्र तनय ( अर्जुन ) को तपश्चर्यानुष्ठान में अविचल उत्साह बढ़ाया ॥ १८ ॥

प्रणिधाय तत्र विधिनाथ धियं दधतः पुरातनमुनेर्मुनिताम् ।
श्रममादधावसुकरं न तपः किमिवावसादकरमात्मवताम् ॥ १९ ॥

प्रणिधायेति । अथ तत्राद्रौ विधिना योगशास्त्रानुसारेण धियं चित्तवृत्तिं प्रणिधाय ध्येयविषये धियं नियम्य । 'सेर्विद्-' इत्यादिना णत्वम् । मुनितां दधतः । तपस्यत इत्यर्थः । पुरातनमुनेः । अर्जुनस्येत्यर्थः । असुकरं दुष्करं तपः श्रमं खेदं नादधौ न चकार । तथाहि आत्मवतां मनस्विनामवसादकरमशान्तिजनकं किमिव । न किञ्चिदित्यर्थः । इवशब्दो वाक्यालङ्कारे ॥ १९ ॥

उस ( इन्द्रकील ) पर्वत पर सर्व प्रथम योगशास्त्रानुकूल चित्त-वृत्ति का नियमन करके, मुनियों की वृत्ति धारण किये हुए अर्जुन को दुष्कर तपश्चर्या से किञ्चिन्मात्र भी खेद नहीं हुआ क्योंकि मनस्वियों के लिये कोई ऐसी वस्तु नहीं है जो चित्त में उद्वेग उत्पन्न करे ॥ १९ ॥

शमयन्धृतेन्द्रियशमैकसुखः शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे विमलः कलाभिरिव शीतरुचिः ॥ २० ॥

शमयन्निति । धृतमिन्द्रियशमो विषयव्यावृत्तिरेवैकं मुख्यं सुखं येन स तथोक्तः । आत्माराम इत्यर्थः । अन्यत्र धृत इन्द्रियाणां शमः सन्तापनिवर्तनमेकमद्वितीयं सुखमाह्लादश्च येन स तथोक्तः । शुचिभिर्निर्मलैर्गुणैर्मैत्र्यादिभिः । अन्यत्र कान्त्यादिभिः ।

शिरसा हरिन्मणिनिभः स वहन्कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः परिमृष्टमूर्धनि तमालतरौ ॥ २३ ॥

शिरसेति ॥ हरिन्मणिनिभो मरकतमणिश्यामोऽभिषवणेन स्नानेन कृतजन्मनो जनिता । अत. पिशङ्गीरिति भाव. । जटा शिरसा वहन्सोऽर्जुनोऽरुणस्यानूरोर्दीधितिभि परिमृष्टमूर्धनि व्याप्तशिरसि तमालतरावुपमा तमालतरो सादृश्य ययावित्यर्थमुपमा । तरोरौपम्याधिकरणत्वात्तदपेक्षया सप्तमी ॥ २३ ॥

मरकत मणि के तुल्य अर्जुन के शरीर का रङ्ग था । नियमानुकूल अभिषेक करने से पैदा हुई जटा को धारण करते हुए तमालवृक्ष से उपमित होते थे, जिसके शिखाग्र पर अंशुमाली ( सूर्य ) की किरणों से व्याप्त हो रही थीं ॥ २३ ॥

नोट —श्लोकाङ्क २५—२७ तक उपमिति दिखलाई गई है । इन तीनों पद्यों में 'तपसा' पद तृतीयान्त कर्ता है, इसका कर्म 'स' यह पद है जो अर्जुन [illegible] लिये आया है ॥ २३ ॥

धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयञ्शुचिभिः ।
रमयाञ्चकार विरजाः स मृगान्कमिवेशते रमयितुं न गुणाः ॥ २४ ॥

धृतेति । धृतहेतिर्धृतायुधोऽप्यधृता जिह्मा मतिः कुटिलमतिर्येन स । शुचिभिश्चरितैर्मुनीनधरयंस्तिरस्कुर्वन् । वेषेणैव भीषणो न तु कर्मणेति भाव । कुत । विरजा रजोगुणरहित सोऽर्जुनो मृगान्रमयाञ्चकार रमयामास । 'रजोगुणे स्त्रीपुष्पे रजो परागे पुंसि' ... इति नकोप' । तथाहि । गुणा दयादय कमिव रमयितुं नेशते । न कं वा वशी कर्तुं न शक्नुवन्तीति भाव । शुचिरेव हि पर विश्वासभीक परस्य न वेषो नापि सत्त्व इति भाव ॥ २४ ॥

यद्यपि अर्जुन ने शस्त्रधारण किया था तथापि वे सरलस्वभाव थे । उन्होंने अपने शुद्ध आचरणों से ऋषियों को भी जीत लिया था तथा रजोगुणों से विमुक्त हो कर हरिणों को रमण कराया क्योंकि दया-दाक्षिण्यादि गुण किसको अपने वश में नहीं ला सकते ॥ २४ ॥

अथास्य त्रिभिस्तपःसिद्धिमाह—अनुकूलेत्यादिना ॥

अनुकूलपातिनमचण्डगतिं किरता सुगन्धिमभितः पवनम् ।
अवधीरितार्तवगुणं सुखतां नयता रुचां निचयमंशुमतः ॥ २५ ॥

अनुकूलेति । अनुकूलपातिनं न तु प्रतिकूलपातिनमचण्डगतिं मन्दगामिनं सुगन्धिम् । गन्धस्यैकत्वे तदेकान्तग्रहणेऽपि कवीना निरङ्कुशत्वात्समासान्त. । अथवा केचिदागन्तुकत्वेऽप्येकवचनेन समासान्तमिच्छन्ति । पवनमभित किरता । प्रवर्तयतेत्यर्थ. । अंशुमत आर्तव. । 'ऋतोरण्' इत्यण्प्रत्यय । स चासौ गुणश्चेतिम-

एव गुणः स च धैर्यं न निहन्ति । विस्मयादिविकारं न जनयतीत्यर्थः । जननेवा तपः क्षीयेत । 'तपः क्षरति विस्मयात्' इति स्मरणादिति भावः ॥ २८ ॥

[ कृपक बडे २ फल होने की आशामें पड़ा हुआ सुन्दर विकसित पुष्पको देख कर कभी २ आश्चर्य में पड जाता है ] परन्तु अर्जुन यद्यपि महती सिद्धि रूप फल के लिये उद्यत थे तथापि विकसित होते हुए कार्य्य–सिद्धि–निमित्त कुसुम रूप जो लक्षण दिखलाई पड़ते थे उससे उनके मनमें रत्ती भी विस्मय न हुआ, क्योंकि जितेन्द्रिय पुरुषों के अनुभाव रूप गुण उन्हें धैर्य्य से च्युत नहीं करते ॥ २८ ॥

तदभूरिवासरकृतं सुकृतैरुपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियः शतयज्वनो वनचरा वसतिम् ॥ २९ ॥

तदिति ॥ सुकृतैस्तपोभिः करणैः अभूरिभिः कतिपयैरेव वासरैः कृतं तत्पूर्वोक्तं वैभवमन्योऽन्यस्य न भवतीत्यनन्यभवम् । अन्यस्यासम्भवतीत्यर्थः । पचाद्यजन्तोत्तरपदेन नञ्समासः । उपलभ्य निश्चित्यास्थितविषादाः प्राप्तखेदा धियो येषां ते वनचराः । 'तत्पुरुषे कृति बहुलम्' इति बहुलग्रहणादलुक् । शतेन शतस्य वा मखानां यज्वनः शतमखस्य । अत्र तत्प्रत्येकविशेषणाभो यजिसमिद्धत्वादनाम्नात्वम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' । वसतिमुपतस्थुः प्रापुः ॥ २९ ॥

वनचरों ने देखा कि इने गिने समयों में ही सुकृतों के सहारे जो ऐश्वर्य इन्हें (अर्जुनको) प्राप्त हुआ है वह किसी अन्य के लिये असम्भव है अतः वे खिन्न होकर शतक्रतु इन्द्र के निवास स्थान ( अमरावती ) में पहुँचे ॥ २९ ॥

विदिताः प्रविश्य विहितानतयः शिथिलीकृतेऽधिकृतकृत्यविधौ ।
अनपेतकालमभिरामकथाः कथयांबभूवुरिति गोत्रभिदे ॥ ३० ॥

विदिता इति ॥ वनचरा इत्यनुवर्तनीयम् । विदिता ज्ञाताः । अनुमतप्रवेशाः सन्त इत्यर्थः । प्रविश्य विहितानतयः कृतप्रणामाः अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षणात्मकस्य विधावनुष्ठाने शिथिलीकृते सति । अनपेतकालमनतिक्रान्तकालं यथा तथा गोत्रभिदे शक्रायेति वक्ष्यमाणप्रकारेणाभिरामकथाः आचख्युः । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्ययः । कथयाम्बभूवुः ॥ ३० ॥

उन वनचरों ने अनुमति लेकर प्रवेश किया फिर हाथ जोड कर इन्द्र देवको नमस्कार किया । वे शैल–रक्षा रूप कार्य्य छोड कर आये हुए थे अतः समय का अतिक्रम न करते हुए श्रवण सुखद वचनों से इन्द्रको सूचित किया ॥ ३० ॥

शुचिवल्कवीततनुरन्यतमस्तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः पुरुषस्तपस्यति तपज्जगतीम् ॥ ३१ ॥

शुचीति ॥ शुचिना वल्केन वल्कलेन चीराच्छादिता तनुर्यस्य सः । तिमिरच्छिदो सूर्यबिम्बमन्यतम इव स्थित इत्युत्प्रेक्षा । असकौ पुरुषः । मघवन्, भवतो गिरावि न्द्रकीले जगतीं भुवं तपस्तापयन्महते जयाय तपस्यति तपश्चरति । कर्मणो रोमन्थ इत्यादिना क्यङि रूपम् ॥ ३१ ॥

(वनवासियों ने कहा) हे महाराज इन्द्र ! एक पुरुष आपके पर्वत (इन्द्रकील) पर वसुधा को तपाता हुआ महान् विजय लाभ के लिये तपःसाधन कर रहा है । वह सर्वथा निष्पाप है । उसका शरीर स्वच्छ वल्कल से आच्छादित है । और अन्धकार निवर्तक तेज-धारियों में से एक सा भी मालूम पड़ता है ॥ ३१ ॥

जयाय तपस्यतीत्युक्तम् । तत्र हेतुमाहुः—

स बिभर्ति भीषणभुजङ्गभुजः पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताश्चरितेन चातिशयिता मुनयः ॥ ३२ ॥

स इति ॥ भीषयेते इति भीषणौ । नन्द्यादित्वाल्ल्युप्रत्ययः । तौ च तौ भुजङ्गौ च ताविव भुजौ यस्य स तथोक्तः । पुरुषो विद्विषां भयविधायि पृथु धनुर्बिभर्ति । अतो जयार्थीत्यर्थः । अमलेन तस्य पुरुषस्य चरितेन वृत्तेन धृतानि सच्चरितानि येषां ते मुनयोऽतिशयिता अतिक्रान्ताः ॥ ३२ ॥

उस ( तपस्वी ) की भुजायें भयङ्कर सर्प के समान हैं । शत्रुओं को भय दायक एक महान् धनुष भी उसके पास है । उसके शुद्धाचरण से सच्चरित्र-युक्त मुनि भी जीत लिये गये हैं ॥ ३२ ॥

अथास्य तपःसिद्धिं वर्णयति—

मरुतः शिवा नवतृणा जगती विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदानुगुणतां गमितः कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥

मरुत इत्यादिना ॥ मरुतो वाताः शिवाः सुखाः । जगती पृथ्वी नवतृणा । शयनास्तरणाद्यनुकूलेत्यर्थः । नभो विमलं नीहारादिरहितम् । रजसि सत्यपां वृष्टिर्भवतीति शेषः । किं बहुना । अस्य पुरुषस्य गुणसम्पदा मूलभूताहिंसादिगुणसम्पत्त्या अनुगुणतामनुकूलतां गमितः । वशीकृत इत्यर्थः । भूतगणः पृथिव्यादिपञ्चकं भक्तिं सेवां कुरुत इवेत्युत्प्रेक्षा ॥ ३३ ॥

और क्या तक कहें पञ्च महाभूत भी उसके दास बन गये हैं इसलिये —पवन देव अनुकूल होकर सुखकर हो गये हैं । भूमि हरे भरे तृण से आच्छादित हो गई है ( जिससे उसे बिस्तर की भी आवश्यकता नहीं है ) आकाश बिना बादल के है । धूलि शान्त करने के लिये वृष्टि कर देता है । वह पुरुष जीवों के ऊपर दयादाक्षिण्यादि रूप अपने गुण सम्पत्ति से पृथ्वी जल तेज वायु आकाश इन पञ्च महा भूतों को अपने अनुकूल बना लिया है अत वे उसके वश होकर उनकी सेवा करते हुए की तरह मालूम पड़ते हैं ॥ [illegible] ॥

इतरेतरानभिभवेन मृगास्तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये परवान्स तेन भवतेव नगः ॥ ३४ ॥

इतरेतरेति ॥ किं च । मृगाः पशवस्तम् । अन्तेऽन्तिके सीदन्तीत्यन्तसदोऽन्तेवासिनः । 'सत्सूद्विष-' इति क्विप् । गुरुमिवेतरेतरेषामनभिभवेनाद्रोहेणोपासते सेवन्ते । प्रचये पुष्पावचये तरवोऽस्य विनमन्ति । करप्रचेया भवन्तीत्यर्थः । तस्येति सम्बन्धसामान्ये षष्ठी । किं बहुना । स नग इन्द्रकीलो भवतेव तेन पुरुषेण परवान्पराधीनः । सात्त्विकस्यापि तवेव स्थातिशयो वर्तत इत्यर्थः ॥ ३४ ॥

और क्या कहें महाराज ? परस्पर द्रोह बुद्धि रखने वाले वन्य पशु भी उसकी सेवा करते हैं —

परस्पर वैमनस्य का परित्याग करके पशु वर्ग उसकी सेवा करता है जैसे विद्यार्थी लोग अपने गुरु की सेवा करते हैं। जब उसे फूलों की आवश्यकता पड़ती है तब वहाँ के वृक्ष उसके सामने झुक जाते हैं। इन्द्रकील भाव तक आप के अधीन था अब वह उसके अधीन हो गया सा प्रतीत होता है ॥ ३४ ॥

उरु सत्त्वमाह विपरिश्रमता परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥

उर्विति ॥ किं च । विपरिश्रमतायासेऽपि श्रमराहित्यमुरु महत्सत्त्वमस्य सारमाह । दुर्बलस्य श्रमजयासम्भवादिति भावः । परममुत्तमं वपुर्जयं प्रथयतीव । आकारेणैव जिष्णुत्वं गम्यत इत्यर्थः । शमिनः शान्तस्यापि तस्य नवसङ्गमनेऽपूर्वप्राप्तौ जनो विभुतायाः प्रभावस्यानुषङ्गि व्यापकम् । न तु हिंसकत्वादनुषङ्गीति भावः । भयमेति । शान्तोऽप्यस्य प्रभावो भयमुत्पादयतीति भावः ॥ ३५ ॥

थोड़ा उसके बल पौरुष का भी अनुमान कर लीजिये —उसे परिश्रमके कार्यों में लेशमात्र भी थकावट नहीं आती इसीसे उसके बल का अनुमान किया जाता है। उसके विशाल आकार के देखने से मालूम पड़ता है कि वह बड़ा विजयी पुरुष है। यद्यपि वह शम का अवलम्बन करता है तथापि जब कभी किसी से उसका प्रथम समागम होता है उस समय उस व्यक्ति को उस के विभुता से भय उत्पन्न हो जाता है ॥ ३५ ॥

अथेदृशोऽसौ क इति चेत्तत्र विद्म इत्याहुः —

ऋषिवंशजः स यदि दैत्यकुले यदि वान्वये महति भूमिभृताम् ।
चरतस्तपस्तव वनेषु सदा न वयं निरूपयितुमस्य गतिम् ॥ ३६ ॥

ऋषीति ॥ स पुरुषः । ऋषिवंशजो, वेति शेषः । काकुर्वा । यदि वा दैत्यकुले । जात इति शेषः । यदि वा महति भूमिभृतामन्वये जातः । तव वनेषु तपश्चरतोऽस्य गतिं स्वरूपं निरूपयितुं वयम् । सहन्त इति सहाः । पचाद्यच् । न सहाः स्म इति

शेषः ॥ ३६ ॥

हम लोग यह भी अनुमान न कर सकने के यह देवता है या दैत्य है अथवा कोई राजा है,—इसने ऋषि कुल में जन्म लिया है अथवा किसी भूमिपाल के उच्च वंश में जन्म लिया है ? आप के वन में यह तपस्यासाधन कर रहा है हम लोग उसके भेद जानने में सर्वथा असमर्थ हैं ॥ ३६ ॥

अयुक्तपरिभाषणापराधं परिहरन्ति—

विगणय्य कारणमनेकगुणं निजयाथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः क्व वनेचराः क्व निपुणा यतयः ॥ ३७ ॥

विगणय्येति ॥ अनेकगुणं बहुप्रकारम् । इन्द्रत्वाद्यनेककल्पनात्मकत्वेन योग्यमित्यर्थः । कारणं तपोऽवस्थानस्य विगणय्य विचार्य । अथवा निजया नैसर्गिक्याऽल्पतया शक्तिरपेक्षाज्ञत्वेन वा कथितं नोऽस्माकमदः इदम् । वचनमित्यर्थः । असदसाध्वपि सहितुं सोढुम् । 'षीपसह— इत्यादिना विकल्पादिडागम । अर्हसि योग्योऽसि । तर्हि सर्वेषु किं नोक्तं तत्राहु वनेचराः क्व । निपुणा यतयो विवेकयुक्ता क्व । नोभयं सङ्गच्छत इत्यर्थः । अज्ञानं नापराध्यतीति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ३७ ॥

उसके तपश्चर्या करने का क्या प्रयोजन है ? इसका हम लोगों ने अनेक प्रकार से अनुमान कर के अथवा अपनी समझ से जो यह बात चाहे अनुचित भले ही हो कहा है आप उसे क्षमा करने के योग्य हैं। जङ्गली जातियों की बुद्धि कहाँ और कुशाग्र मति तपस्वी कहाँ ( दोनों में बहुत अन्तर है ) ॥ ३७ ॥

अधिगम्य गुह्यकगणादिति तन्मनसः प्रियं प्रियसुतस्य तपः ।
निजुगोप हर्षमुदितं मघवा नयवर्त्मगाः प्रभवतां हि धियः ॥ ३८ ॥

अधिगम्येति ॥ मघवेन्द्र इति पूर्वोक्तं गुह्यकगणात्तन्मनसः प्रियं प्रियसुतस्यास्य तपोऽधिगम्य ज्ञात्वा । गुह्यकापेक्षया समानकर्तृकत्वात्क्त्वानिर्देशः । उदितं तत्तपसो देवकार्यपरत्वादुत्पन्नं [illegible] निजुगोप गोपयामास । तथा हि । प्रभवतां प्रभूणां धियो नयवर्त्मगा नीतिमार्गानुसारिण्यो हि । अन्यथा मन्त्रभेदे कार्यहानिः स्यादिति भावः ॥ ३८ ॥

इन्द्र ने अपने प्रिय पुत्र अर्जुन के इच्छानुकूल तपस्साधन की बात गुह्यकों ( वनेचरों ) के मुख से सुनकर उत्पन्न होने वाले हर्षातिरेक को छिपा लिया ( किसी को विदित होने न दिया ) क्योंकि बड़े लोगों की बुद्धि सर्वदा नीतिमार्गावलम्बिनी होती है ॥ ३८ ॥

प्रणिधाय चित्तमथ भक्ततया विदितेऽप्यपूर्व इव तत्र हरिः ।
उपलब्धुमस्य नियमस्थिरतां सुरसुन्दरीरिति वचोऽभिदधे ॥ ३९ ॥

प्रणिधायेति ॥ अथ हरिरिन्द्रश्चित्तं प्रणिधाय विषयान्तरपरिहारेणात्मन्यवस्थाप्य तत्र तस्मिन्नर्जुने भक्ततया विविते सत्यपि । उपलक्षणे तृतीया । अपूर्वं इव । अविदित इवेत्यर्थः । 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पाभ्यां स्मिन्नादेशः । अस्याऽर्जुनस्य नियमस्थिरतां दार्ढ्यमुपलब्धुम् । परीक्षितुमित्यर्थः । लोकप्रतीत्यर्थमिति भावः । सुरसुन्दरीरिति वक्ष्यमाणप्रकारं वचोऽभिदधे ॥ ३९ ॥

यद्यपि उन्होंने समाधिस्थ हो कर देखा तो अर्जुन को अपना अनन्य भक्त पाया तथापि अपरिचित की भाँति तपस्यामें दृढ सङ्कल्प की परीक्षा के लिये अमराङ्गनाओं से कहा—॥३९॥

सुकुमारमेकमणु मर्मभिदामतिदूरगं युतममोघतया ।
अविपक्षमस्त्रमपरं कतमद्विजयाय यूयमिव चित्तभुवः ॥ ४० ॥

सुकुमारमिति ॥ मर्मभिदां मर्मच्छेदिनाम् । अस्त्राणां मध्य इत्यर्थः । 'यतश्च निर्धारणम्' इति षष्ठी । अपरमन्यत्कतमत् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । यूयमिव सुकुमारं कोमलं न तु कठिनम् । अन्यत्तु कठिनं भवति । तथैकं न बहु । तदनेकं भवति । तथाणु सूक्ष्मं न स्थूलम् । अलक्ष्यलक्ष्यप्रवेशित्वादिति भावः । अन्यत्तु लक्ष्यलक्ष्यप्रवेशि । तत्तु समीपलक्ष्यभेदि । तथातिदूरगं दूरलक्ष्यभेदि, तथाऽमोघतयाऽमोघत्वगुणेन युतं युक्तम् । न कदाचिदप्यपचरतीति भावः । अन्यत्तु कदाचिदपि लक्ष्यादपराध्यति । तथाऽविपक्षमसत्प्रतीकारम् । अन्यत्तु विद्यमानप्रतीकारम् । चित्तभुवः कामस्य । कर्तरि षष्ठी । विजयाय । एतद्विशेषणविशिष्टमस्त्रमस्तीति शेषः । न किंचिदस्तीत्यर्थः । अत्रोपमालङ्कारः । साभिप्रायविशेषणत्वात्परिकरालङ्कारश्च । तयोश्चानयोरङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

और अस्त्रों की अपेक्षा कामदेव के बाण की महत्ता बहुत बातों में बढी चढी है क्यों कि —सुर सुन्दरियो, मनोभव का अस्त्र आप लोगों की तरह सुकुमार है ( और अस्त्रतो ऐसे कभी नहीं देखने में आये क्यों कि वे सर्वथा कठिन होते हैं ) मर्म स्पर्शी अस्त्रों में से यह एक है। और अस्त्रों की तरह आकार में बहुत बडा नहीं है बिल्कुल अणु है। और प्रकार के अस्त्र तो लक्ष्य के दूर होने पर कदाचित् विफल भी हो सकते हैं, परन्तु यह तो अमोघ है और अस्त्र से रक्षा के लिये बहुतसे साधन वर्तमान हैं, परन्तु इससे ( कामदेव के बाण से ) बचने का कोई उपाय ही नहीं है। ( अब आपही लोग बतलाइये कि ) विजय प्राप्ति के लिये इस से बढकर दूसरा और कौन अस्त्र हो ही सकता है ? ॥ ४० ॥

असामर्थ्यशङ्कां परिहरति—

भववीतये हतबृहत्तमसामवबोधवारि रजसः शमनम् ।
परिपीयमाणमिव वोऽसकलैरवसादमेति नयनाञ्जलिभिः ॥ ४१ ॥

न्धर्वैः सहिता उपेत्य गत्वा तस्य तपो विघ्नयत विघ्नवत्कुरुत । विहतेत्यर्थः । विघ्नय-च्छब्दान्मत्वन्तात् 'तत्करोति-' इति णिचि लोट् । णाविष्ठवद्भावान्मतुपो लुक् । न चात्रासामर्थ्यशङ्का कार्येत्यर्थान्तरन्यासेनाह—हृतेति । ननु सम्बोधने । हे अप्सरस, हृतानि वशीकृतानि वीतरागाणा नि स्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिस्तासां वो युष्माकमप्सरसां सुखसङ्गिन पुरुष प्रति सुखाभिलाषिण प्रत्यवजितिर्विजय सुखा सुखसाध्या न तु दुष्करा खलु । एतेनाय सखार्थो न रित्युक्तम् । अर्थान्तरन्यास ॥ ४३ ॥

क्या आप लोग इस बात को समझ गईं कि आप लोगों की इतनी प्रशंसा क्यों की गई कदाचित् आप लोग अपने २ विचारों से अनेक प्रकार के कार्यों का अनुमान करेंगी इस लिये मैं आप लोगों को स्वयं बतलाये देता हूं सुनिये —आप लोग वादन कलाओं में कुशल गन्धर्वों को साथ लेकर इन्द्रकील गिरि पर जांय ( जहां एक पुरुष तपश्चर्या कर रहा है ) और उस पुरुष की तपश्चर्या को भ्रष्ट करें । आप लोग तो मुमुक्षुओं के चित्त को भी आकर्षित कर लेती हैं अत सुखाभिलाषी पुरुष तो आसानी से वश में आसकता है ॥ ४३ ॥

अथ सुखसङ्गित्वमेवाह—

अविमृष्यमेतदभिलष्यति स द्विषतां वधेन विषयाभिरतिम् ।
भववीतये न हि तथा स विधि क्व शरासन क्व च विमुक्तिपथ ॥४४॥

अविमृष्यमिति ॥ हे अप्सरस ,स पुरुषो द्विषतां शत्रूणां वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखमभिलष्यति वाञ्छति । 'वा भ्राश-' इत्यादिना श्यन्प्रत्यय । एतद्विषयासक्त्वमविमृष्यमविचार्यम् । अविमृष्यमसन्दिग्धमित्यर्थ । 'ऋदुपधाच्चाक्लृपिचृते' इति क्यप् । भवतीभिर्न सन्दिग्धव्यमित्यर्थ । हि यस्मात्स विधि 'स बिभर्ति भीषणभुजङ्गभुज ' इत्यादिश्लोकोक्तोऽनुष्ठानप्रकारो भववीतये संसारमुक्त्यै न भवति । कुत इत्याह—शरासन धनु क्व, विमुक्ते पन्थाश्च क्व । द्वय परस्पर विरुद्ध-मित्यर्थ । न खलु हिंसासाध्या मुक्तिरिति भाव । अर्थान्तरन्यासोऽलङ्कार ॥४४॥

आप लोग यह भी नहीं कह सकतीं कि वह सुखार्थी नहीं है यदि है तो आपने (इन्द्रने) कैसे जाना ? मैं इसे भी आप लोगों से बतला रहा हूँ थोडा ध्यान दीजिये —वह तपस्वी शत्रुका विच्छेद कर के विषय सुख की अभिलाषा करता है । वह 'विषयासक्त नहीं है' इसकी शङ्का ही दूर रखना चाहिये क्योंकि मुक्ति की कामना करने वालों के लिये इस तरह का तपस्साधन किस लिये हो सकता है । धनुष कहां और मुक्ति का मार्ग कहां ( अर्थात् वह सशस्त्र तपश्चरण कर रहा है और मुक्ति मार्गमें शस्त्र की आवश्यकता नहीं है) इससे विदित होता है कि वह मुमुक्षु नहीं ॥ ४४ ॥

न च शापभयमपि सम्भाव्यमस्मादित्याह—

पृथुधाम्नि तत्र परिबोधि च मा भवतीभिरन्यमुनिवद्विकृतिः ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः ॥४५॥

पृथ्विति ॥ पृथुधाम्नि महातेजसि तत्र तस्मिन्पुरुषविषयेऽन्यमुनिवदन्यस्मिन्मुनाविव । तत्र तस्येव इति वतिप्रत्ययः । विकृतिः कोपविकारश्च भवतीभिर्मा परिबोधि मा विज्ञायि । मा शङ्कीति यावत् । बुध्यतेः कर्मणि लुङ् । माङ्योगादाशीरर्थेऽडागमाभावश्च । तथा हि—स्वयशांस्यवतां रक्षताम् । यशोधनानामित्यर्थः । विक्रमवतां धियश्चित्तानि वधूषु स्त्रीविषयेष्वघानि व्यसनानि । 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती । न विमृशन्ति । अर्थान्तरन्यासः । स्त्रीहिंसायाः शूराणां यशोहानिकरत्वात्सर्वथा वो हिंस्रः स इत्यर्थः ॥ ४५ ॥

सम्भव है आप लोग शाप से डरती हों किन्तु यह ठीक नहीं है क्योंकि —यद्यपि वह महा तेजस्वी है तथापि अन्य ऋषियों की तरह उसमें कोप विकार का भी आप लोग ख्याल न करें, क्योंकि जो पराक्रमशाली पुरुष हैं और अपने यश की रक्षा करते हैं वे स्त्रियों के प्रति हिंसा बुद्धि नहीं रखते ॥ ४५ ॥

आशासितापचितिचारु पुरः सुराणामादेशमित्यभिमुखं समवाप्य भर्तुः ।
लेभे परां द्युतिममर्त्यवधूसमूहः सम्भावना ह्यधिकृतस्य तनोति तेजः ॥४६॥

आशासितेति ॥ अमर्त्यवधूसमूहोऽप्सरसां गणः सुराणां पुरोऽग्रे आशासितापचितिभिरपेक्षितसम्भावनाभिश्चारु यथा तथा । 'पूजानमस्यापचितिः' इत्यमरः । अभिमुखं समक्षं भर्तुः स्वामिन इति पूर्वोक्तमादेशं नियोगं समवाप्य परां द्युतिं लेभे । तथा हि । अधिकृतस्य कस्मिंश्चिदधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥ ४६ ॥

अमर ललनाओं का समूह स्वामी के आदेश को मान कर देवताओं के समक्ष पूर्वोक्त प्रकार की प्रशंसा से अधिक सुन्दर कान्ति को प्राप्त हुआ क्योंकि किसी अधिकार में लगाये गये पुरुष की यदि प्रशंसा की जाय तो उसके तेज की अभिवृद्धि होती है ॥ ४६ ॥

प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।
अचलनलिनलक्ष्मीहारि नालं बभूव स्तिमितममरभर्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये षष्ठः सर्गः ।

---

प्रणतिमिति ॥ अथ प्रणतिं विधाय सद्मन इन्द्रभवनात्प्रस्थिताः प्रचलिताः स्तनभरैर्नमितान्यङ्गानि यासां ताः । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् ।

प्रीतिभाज स्वामिसम्भावनया सन्तुष्टास्ता अङ्गना अचलनलिनानां स्थिरकमलानां लक्ष्मीं हरतीति तच्छ्रीहरम् । तन्मनोहरमित्यर्थं । कुत । स्तिमित विस्मयनिश्चलमसुरभर्तुरक्ष्णां सहस्र कर्तृ द्रष्टुमल समर्थं न बभूव । तासां सौन्दर्यसागरस्योद्वेलत्वादिति भाव । अत्रोपमालङ्कार ॥ ४७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय-काव्यव्याख्यायां घण्टापथसमाख्यायां षष्ठ सर्गं समाप्त ।



वे अप्सरायें इन्द्र को प्रणाम कर घर से चलीं । वे ( पीवर ) स्तनों के भार से झुकी हुई थीं । स्वामी की स भावना से वे खूब तृप्त हो चुकी थीं । उनके सौन्दर्य को अविचल कमल की शोभा अपहरण करने वाले सुरराज के सहस्रों नेत्र भी एकटकी बाँध कर देखने में समर्थ न हो सके अर्थात् हजार आँखें भी उन ललनाओं के सौन्दर्य देखने के लिये जहां कमी पडती, वे वहाँ की शोभा देखने से तृप्त नहीं होती थीं ॥ ४७ ॥

इति षष्ठ सर्ग ।



# स : सर्गः ।

श्रीमद्भि सरथगजै सुराङ्गनानां गुप्तानामथ सचिवैस्त्रिलोकभर्तु ।
समूर्च्छन्नलघुविमानरन्ध्रभिन्न प्रस्थानं समभिदधे मृदङ्गनाद ॥१॥

श्रीमद्भिरिति ॥ अथ प्रस्थानानन्तरं श्रीमद्भि शोभावद्भि । सह रथगजेन सरथगजास्तै । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहि । त्रयाणां लोकानां भर्तुस्त्रिलोकभर्तुरिन्द्रस्य । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमास । सचिवैर्गन्धर्वैर्गुप्तानां सुराङ्गनानां प्रस्थानं गमनमलघुषु महत्सु विमानरन्ध्रेषु विमानानां कुक्षिकुहरेषु भिन्न प्रतिध्वानैरनेकीभूतोऽत एव समूर्च्छन्व्याप्नुवन्मृदङ्गनाद समभिदधे आचख्यौ । पौरेभ्य इति शेष । अस्मिन्सर्गे प्रहर्षिणीवृत्तम्—'म्नौ ज्रौ गस्त्रिदशयति प्रहर्षिणीयम्' इति लक्षणात् ॥ १ ॥

त्रिलोकेश ( इन्द्र ) की अप्सरायें, सुन्दर २ रथ और हाथियों के साथ गन्धर्वों से सुरक्षित होकर प्रस्थान कीं । उस का सूचना मृदङ्ग घोष ने दिया जो ( मृदङ्ग घोष ) विमानों के बड़े २ झरोखों से प्रतिध्वनित होने के कारण अनेक होकर सर्वत्र व्याप्त हो गया था ॥२॥

सोत्कण्ठैरमरगणैरनुप्रकीर्णान्निर्याय ज्वलितरुच पुरान्मघोन. ।
रामाणामुपरि विवस्वत स्थितानां नासेदे चरितगुणत्वमातपत्रै ॥२॥

सोत्कण्ठैरिति ॥ सोत्कण्ठैः । सवेदनैरुत्सुकैरित्यर्थः । अमरगणैरनुप्रकीर्णोदाकीर्णोज्ज्वलितरुचो दीप्तप्रभाः प्रस्थानघोषं श्रुत्वा पुरादमरावत्या निर्याय निर्गत्य । पादे ल्यपो ल्यप् । विवस्वत उपरि स्थितानां रामाणाम् । आतपात्त्रायन्त इत्यातपत्त्रे । सुपि—' इति योगविभागात्कप्रत्ययः । परिलघुत्वं साध्यत्वं नासेदे न प्राप । तासां सूर्योपरिस्थितत्वादातपासम्भवादिति भावः ॥ २ ॥

उनके प्रस्थान की सूचना पाते ही अमरावती में इधर उधर देखना लोग उत्कण्ठित हो घूमने लगे। उस समय इन्द्र पुरी का प्रभाव बढ़ गया था। वहां से सुर वनिताएं चल कर जब सूर्य मण्डल के ऊपर पहुँच गईं तब वहां उनके आतपत्र (छाते) व्यर्थ हो गये कारण यह है कि सूर्य की किरणें तो सीधे पृथ्वी की ओर पड़ती हैं अतः सूर्य मण्डल के ऊपर उन के पहुँच जाने के कारण उन पर किरणें नहीं पड़ती थीं अतः जिसका अर्थ है—आतप=धूप त्र=रक्षा करना, धूप से रक्षा करने वाले छत्र उन के व्यर्थ ही हो रहे थे क्योंकि जिससे रक्षा करना उस वस्तु का अभाव ही था तो फिर रक्षा किससे ? ॥ २ ॥

धूतानामभिमुखपातिभिः समीरैरायासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूनामुष्णांशुद्युतिजनितः कपोलरागः ॥३॥

धूतानामिति ॥ अभिमुखपातिभिः समीरैः प्रतिकूलवायुभिर्धूतानामिति दुर्निमित्तसूचनम् । आयासात्परिश्रमादविशदलोचनोत्पलानां वधूनामुष्णांशुद्युतिजनित आतपकृतः कपोलानां रागः पाटलत्वम् । मदेन जनितां श्रियम् । तत्सदृशीं श्रियमित्यर्थः । अत एव निदर्शनालङ्कारः । आनिन्ये आनीतवान् । वधूरिति शेषः । आङ्पूर्वान्नयतेः कर्तरि लिट् । नकाराद्युपलक्षणत्वादात्मनेपदम् ॥ ३ ॥

( मार्ग में ) प्रतिकूल वायु के कारण उन के ( सुर कन्याओं ) के अङ्ग शिथिल हो गये। मार्ग जनित श्रम के कारण उनके नेत्र कमल भी मुरझाये [illegible] थे। ( परिश्रम के कारण जो उन के कपोल की लालिमा नष्ट हो गई थी ) वह कपोल की लालिमा जो सूर्य के किरणों से फिर लौट आई थी उन अमर कन्याओं का मदों से उत्पन्न शोभा को पहले की भाँति कर दिया ॥ ३ ॥

तिष्ठद्भिः कथमपि देवतानुभावादाकृष्टे प्रजविभिरायतं तुरङ्गैः ।
नेमीनामसति विवर्तने रथौघैरासेदे वियति विमानवत्प्रवृत्तिः ॥४॥

तिष्ठद्भिरिति ॥ कथमपि बाढम् । कथमादि तथाप्यन्ते यत्ने गौरवबाढयो इति वैजयन्ती । देवतानामनुभावात्तिष्ठद्भिः । अपतद्भिरित्यर्थः । रथविशेषणमेतत् । प्रजविभिर्वेगवद्भिस्तुरङ्गैरायतं दूरमाकृष्टे रथौघैर्वियत्याकाशे नेमीनां चक्रधाराणाम् । 'चक्रधारा प्रधिर्नेमिः' इति यादवः । विवर्तने भ्रमणेऽसति विमानवद्वि

मानानामिवेत्युपमा । 'तत्र तस्येव' इति वतिः । प्रवृत्तिर्गतिरासेदे प्राप्ता । सदेः कर्मणि लिट् ॥ ४ ॥

सुर बालाओं के रथ समूह देवताओं के प्रभाव आकाश मण्डल में टिके हुए थे। अत्यन्त वेग शाली अश्व उनका सञ्चालन करते थे। निराधार होने के कारण उन के चक्र की भ्रान्ति रुक गई थी जिस से वे अन्तरिक्ष में जाते हुए साक्षात् विमान बन गये थे ॥४॥

कान्तानां कृतपुलकः स्तनाङ्गरागे वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषा रम्याणां विकृतिरपि श्रियं तनोति ॥

कान्तानामिति ॥ कान्तानां स्तनानामङ्गरागे कृतपुलकः जनितोद्भेदः । कृतरोमाञ्च इत्यर्थः । च्युताः प्रमृष्टास्तिलका येषां तेषु वक्त्रेषु मौक्तिकाभः श्रमसलिलोद्गमः स्वेदोद्भेदो विभूषा भूषणं सम्पेदे सम्पन्नः । कर्तरि लिट् । तथाहि । रम्याणां स्वभावसुन्दराणां विकृतिरपि श्रियं तनोति । अतः स्वेदस्यापि विभूषणत्वमुपपन्नम् इति भावः ॥ ५ ॥

देव वधूटियों का श्रम जल कण उन के स्तनों को रोमाञ्चित कर दिया था । उससे उनके भाल के तिलक भी मिट रहे थे । वे मोती की तरह झलक रहे थे । उस समय वे (श्रम कण) उन के अलङ्कार का कार्य कर रहे थे । क्योंकि स्वाभाविक मनोरम वस्तुओं में यदि कोई विकृति उत्पन्न हो जाय तो उससे उनकी शोभा ही होती है ॥ ५ ॥

राजद्भिः पथि मरुतामभिन्नरूपैरुल्कार्चिः स्फुटगतिभिर्ध्वजांशुकानाम् ।
तेजोभिः कनकनिकाषराजिगौरैरायामः क्रियत इव स्म सातिरेकः ॥६॥

राजद्भिरिति ॥ मरुतां पथ्याकाशे राजद्भिर्दीप्यमानैरभिन्नरूपैरविच्छिन्नाकारैरत उल्कानामर्चीषीव स्फुटगतीनि दीप्तमार्गाणि येषां तैः । कनकस्य निकाषः कषणं तस्य राजी रेखा तद्वद्गौरैररुणैः । 'गौरः पीतेऽरुणे श्वेते' इति विश्वः । ध्वजांशुकानां तेजोभिः पताकाकान्तिभिरायामस्तेषामेव दैर्घ्यं सातिरेकः सातिशयः क्रियते स्मेव कृत इव । दीर्घा ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमा इव कथ्यन्त इवेत्युत्प्रेक्षा । सा चोल्कायुपमानुप्राणिता ॥ ६ ॥

विमानस्थ पताकाओं के वस्त्रों की दीप्तियां नील नभ में विशोभित हो रही थीं । सबों के आकार एक से थे । तारों की गति सदृश उनकी भी गति व्यक्त थी । वे कसौटी पर घिसी हुई सुवर्ण रेखा के सदृश अरुण वर्ण की थीं । वे ( पताकाओं की कान्तियाँ ) उन पताकाओं के वस्त्रों की लम्बाई और चौड़ाई को अधिक विस्तृत की तरह बना रही थीं ॥ ६ ॥

रामाणामवजितमाल्यसौकुमार्ये सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये कल्याणी विधिषु विचित्रता विधातुः ॥७॥

गाहेरूदित्वादिड्विकल्पः । समाहूतावेवाकस्यामम्भेवेत्युत्प्रेक्षा । 'हूतिराकारणाह्वानम्' इत्यमरः । ह्वयतेर्लिट् 'अभ्यस्तस्य च' इति सम्प्रसारणम् ॥ २७ ॥

यह तो अप्सराओं का वन विहार था अब जल विहार की बारी आई—

सुरनदी ( गङ्गा ) में मछलियों को चिकन से कमल हिल रहे थे। उनमें कीचड़ नाम मात्र को भी न था, एक के बाद एक लहरों का ताँता लगा हुआ था, कलहंस कल कूजन कर रहे थे। इन सब बातों से यह मालूम पड़ता था मानो गङ्गा उन सुरवधूटियों को जल में स्नान करने के लिये बुला रही थीं ॥ २७ ॥

प्रयान्तघर्माभिभवः शनैर्ययौ विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ २८ ॥

प्रयान्तेति ॥ प्रयान्तघर्माभिभवः प्रशान्तोष्मबाधः । 'वा दान्तशान्त-' इत्यादिना निपातनात्साधु । शनैर्ययौ मन्दं ववहे । याते क्तप्रत्ययः । परिमृष्टपङ्कजः पद्मगन्धीत्यर्थः । आत्तशीकरः । कृत । तरङ्गमालामन्तरे गोचरः स्थानं यस्य सोऽनिलो विलासिनीभ्यो भुजालम्बं ददाविवेत्युत्प्रेक्षा । शिशिरवायुसम्पर्कात्तासामुत्सुकता इत्यर्थः ॥

( जल विहारार्थ प्रस्थान करते समय ) वायु देवता ने धूप के उपद्रव में कमी कर दिया, मन्थर गति धारण कर लिया, और कमलों का स्पर्श कर सुगन्धि भी अपने साथ ले लिया। वे नदी के तरङ्गों के बीच बीच में डेरा डाल रक्खे थे यही कारण था कि वे जलकण भी वहन करते थे। यही पवन देव का स्वरूप था मालूम पड़ रहा था कि उन सुराङ्गनाओं को पार उतरने के लिये वे अपने हाथों का अवलम्बन दे रहे थे ॥ २८ ॥

गतैः सहावैः कलहंसविक्रमं कलत्रभारैः पुलिनं नितम्बिभिः ।
मुखैः सरोजानि च दीर्घलोचनैः सुरस्त्रियः साम्यगुणान्निरासिरे ॥२९॥

गतैरिति ॥ सुरस्त्रियोऽप्सरसः सहावैः सविलासैर्गतैर्गतिभिः । नपुंसके भावे क्तः । कलहंसानां विक्रमं गतिम् । विलासविधुरमिति शेषः । तथा नितम्बिभिः प्रशस्तनितम्बैः कलत्रभारैः जघनभारैः पुलिनम् । नितम्बभारशून्यमित्यर्थः । तथा दीर्घलोचनैः मुखैः सरोजानि च । अलोचनानीति शेषः । साम्यगुणात् समानगुणत्वान्निरासिरे निरस्तवत्यः । गुणवदगुणयोः कुतः साम्यमिति भावः । अस्यतेः कर्तरि लिट् । 'उपसर्गादस्यत्यूह्योर्वा-' इति विकल्पादात्मनेपदम् ॥ २९ ॥

अमराङ्गनाओं ने अपने सविलास मन्थर गमनसे राजहंसों के गति को, नितम्बशाले जघनों के भार से ( नदी के ) सैकत प्रदेश को, विशाल नयनों से युक्त मुखों से कमलों को गुणों की समानता होने के कारण जीत लिया। तात्पर्य्य यह कि कलहंस तो केवल मन्द गमन के लिये प्रसिद्ध हैं सुराङ्गनाओं में हाव अधिक था। नदी के पुलिनों को जो उन्होंने जीता उसमें भी कारण यह था कि पुलिन तो केवल ऊँचाई के लिये प्रसिद्ध हैं नितम्ब तो उनकी बराबरी करता था जघन भार विशेष पड़ जाता था। उनके मुख से कमलों की

समानता भी ठीक ही है परन्तु कमलों को तो चंचल नहीं होनी चाहिये के कारण वे उनसे कई गुना बढ़ा हुई थी ॥ २९ ॥

निभिन्नपर्यन्तगमीनपङ्क्तयं पुरो विगाढा सखिभिर्मरुत्वतः ।
कथंचिदाप सुरसुन्दरीजनैः समीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ३० ॥

विभिन्नेति ॥ विभिन्ना विप्लुतसमावा पर्यन्तगा प्रान्तगता मीनानां पङ्क्तयो यस्यां ता । पुरः । मरुत्वतः सखिभिर्मिन्द्रस्य सम्बन्धैर्गन्धर्वैः पुर [illegible] वि गाढा प्रविष्टा । तासां विश्वासार्थं गर्तग्राहादिपरीक्षार्थं चेति भावः । सभी तिभिरप्रविष्टविषयत्वात् समनैः । विगाढेति इति पाठोऽप्ययमेवार्थः । सुरसुन्दरीजनैस्तदेवावगाहनं प्रथमं यथा तथाप एव कथंचिदपि कृच्छ्रेण । आप प्रपेदिरे अयाहिरे ॥ ३० ॥

( उस सरोवर के तट पर पहुंच कर ) इन्द्र के मित्र गन्धर्वों ने सबसे पहले जल में प्रवेश किया जिससे यह पता चल जाय कि कहीं जल के भीतर गड्ढा अथवा कोई हिंसक जन्तु तो नहीं है ? फिर डरते डरते अप्सराओं ने भी पानी में किसी तरह पैर रखा। मछलियां का समूह पंक्ति बनाकर तैर रहा था। उसका ताता टूट गया और [illegible] अलग २ हो व में चली गई ॥ ३० ॥

विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः ।
विभिद्यमाना विससार सारसानुदस्य तीरेषु तरङ्गसंहतिः ॥ ३१ ॥

विगाढेति ॥ प्रयत्नेन संवाहिता क्षेपिता पीवरा स्थूलाः ऊरवो याभिस्ताभी रमणीभिरम्भसि विगाढमात्रे प्रविष्ट एव सति । सुप्सुपेति समासः । मात्रशब्दोऽवधारणे इत्यमरः । विभिद्यमाना स्वयं विशीर्यमाणा । कर्मकर्तरि शानच् । तरङ्गसंहतिस्तीरेषु सारसान् पक्षिविशेषान् । सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः इति यादवः । यद्वा—सारसान् हंसान् । चक्राङ्गः सारसो हंसः इति शाश्वतः । उदस्योत्सार्य विससार विततार ॥ ३१ ॥

सुन्दरियों ने ज्यों ही बड़े परिश्रम से अपनी मोटी मोटी जङ्घाओं को जल में रखा त्यों ही तरङ्गमालायें भिन्न भिन्न होकर तट प्रदेश में जाकर वहाँ सारसों ( हंस चकवा सारस इत्यादि ) को दूर भगा कर विस्तृत हो गई ॥ ३१ ॥

शिलाघनैर्नाकसदामुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ ३२ ॥

शिलेति ॥ शिलावद्घनैः कठिनैः । नाकसदां गन्धर्वाणामुरःस्थलैर्बृहन्निवेशैर्महासंस्थानैः । अतिस्थूलैरित्यर्थः । वधूपयोधरैश्च तटमभिनीतेन नीतेन प्रापितेनात एव विभिन्नवीचिना सञ्जातोर्मिणाम्भसा कर्त्रा । रुषेवेति हेतूत्प्रेक्षा । कलुषत्वमाविलत्वं मन-

क्षोभश्च ध्वन्यते । भेजे । कर्मणि लिट् । यथा कश्चिन्मृदुस्वभाव केनचित्कठिनादिना साङ्गभङ्ग ताडयित्वा निष्कासित क्षुभ्यति तद्वदिति भाव । 'कलुषत्वम्' इत्यत्र वाच्यप्रतीयमानयोरभेदाध्यवसाय । अन्यथा शुद्धस्याम्बसाविलत्वस्य रोषहेतुत्वा तुल्येष्वनुविधानादिति ॥ ३२ ॥

उन स्वर्गनिवासियों ( गन्धर्वों ) के पत्थर की शिला के समान कठोर वक्ष स्थलों तथा रमणियों के पीन पयोधरों से लहरें खण्ड खण्ड होकर तट प्रदेश में पहुँच जाती थीं वहाँ मृत्तिका के सम्पर्क से कलुषित होकर जल को भी कलुष कर देती थीं उस समय विदित होता था कि गङ्गा उनके कार्यों से रुष्ट हो गई हैं ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः ।

अतिप्रसङ्गाद्विहितागसो मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ ३३ ॥

विधूतेति ॥ विधूता विक्षिप्ता केशा यैस्ते परिलोलिता विलोडिता स्रजो यैस्ते प्रविलुप्तचन्दना प्रमृष्टाङ्गरागा अतिप्रसङ्गादतिपरिचयात् सुराङ्गनानां विहितागस कृतमण्डनभञ्जनरूपापराधा अत एव ऊर्मयस्तरङ्गा सभया इव सभीत्यो भीता इव मुहु प्रकम्पमीयु । स्वाभाविकस्य कम्पस्य भयहेतुकत्वमुत्प्रेक्ष्यते—यद्वा,—सुराङ्गनानां विधूतकेशा इत्यादियोजना । सापेक्षत्वेऽपि गमकत्वात् समास । सीसमहणसाह-समपराध । भय तु राजस्त्रिय इति ॥ ३३ ॥

ऊर्मिलहरा ( जलोर्मिय ) को लहरों ने अमररमणीयों के केशों को इधर उधर विक्षिप्त कर डाला, उनकी पुष्पमालाओं को चञ्चल कर दिया, और उनके अङ्गराग तथा चन्दनों को मिटा डाला । इस प्रकार उनकी मण्डनसामग्री को नष्ट भ्रष्ट करके वे लहरें अपराधिनी बन गईं इसी से वे डर कर काँपती हुई सी मालूम पड़ने लगीं ॥ ३३ ॥

विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये ।

हृतस्य शेषानिव कुङ्कुमस्य तान् विकत्थनीयान्दधुरन्यथा श्रिय ॥३४॥

विपक्षेति ॥ विपक्षस्य सपत्नीजनस्य चित्तानामुन्मथना । व्यथका इत्यर्थ । बहुलग्रहणात्कर्तरि ल्युट् । ये नखव्रणा नखक्षतानि । 'व्रणोऽस्त्रियाम्' इत्यमर । विभ्रमस्य सौन्दर्यस्य मण्डनम् । तादर्थ्येऽप्यस्ववासादिवत् षष्ठीसमास । न तु चतुर्थीसमासो यूपदार्वादिवत् प्रकृतिविकाराभावादिति । तेन कुङ्कुमलेपादिना तिरोहितास्तज्जला हृतस्य क्षालितस्य कुङ्कुमस्य व्यञ्जकत्वेन शेषानिवावशिष्टलेशानिव स्थितानित्युत्प्रेक्षा । विकत्थनीयान् भर्तृत्वाप्रम्यस्य व्यञ्जकत्वेन श्लाघनीयान् । तान् नखव्रणान् । श्रियोऽन्यथा दधु । प्रकाश दधुरित्यर्थ ॥ ३४ ॥

स्नान करते समय सुरसुन्दरियों के शरीर के नखक्षत, जो सपत्नियों को काँटे के सदृश खटकने वाले थे कुङ्कुम केशादि शोभासामग्रियों से तिरोहित कर दिये गये थे । वे जल से धुल कर व्यक्त हो रहे थे तथापि अवशिष्ट कुङ्कुम रेखा के सदृश थे । अत उन्होंने उन्हें

किसी सखी के उरस्थल पर, जो उन्नत स्तनों से मनोरम था, प्रिय ने स्वयं माल्यगुम्फित करके उसकी सौत के सामने ही पहनाया था। यद्यपि वह ( माल्य ) जल के कारण मसल गया था, तथापि उस सखी ने उसका परित्याग नहीं किया क्योंकि गुण तो प्रेम में निवास करते हैं किसी वस्तु में नहीं ( किसी कवि का कथन है,-प्रेम सहित मरिबो भलो जो विष देय बुलाय, ) ॥ ३७ ॥

असंशयं न्यस्तमुपान्तरक्ततां यदेव रोद्धुं रमणीभिरञ्जनम् ।
हृतेऽपि तस्मिन्सलिलेन शुक्लतां निरास रागो नयनेषु न श्रियम् ॥३८॥

असंशयमिति ॥ स्त्रीणां नेत्रशोभार्थमञ्जनधारणमम्बुविहारोपगमाद्रक्तवर्णस्य धारणा सह शुक्लत्वतिरोधाय च निश्चितमित्युत्प्रेक्ष्यते—रमणीभिर्यदञ्जनं न्यस्तम्। तदिति शेषः। यत्तदोर्नित्यसम्बन्धात्। यदञ्जनमुपान्तयो रक्ततां रोद्धुं प्रतिबद्धुमेव न्यस्तम्। न तु शोभार्थमित्यर्थः। अन्यथा रागाभिव्याप्त्या शुक्लत्वतिरोधानं स्यादित्यर्थः। असंशयमित्युत्प्रेक्षाव्यञ्जकम्। संशयस्याप्यभावः। नात्र संशयोऽस्तीत्यर्थः। अर्थाभावेऽव्ययीभावः। कुत एतदिति चेत्तस्मिन्नञ्जने सलिलेन हृते क्षालिते सत्यपि रागः पूर्वोक्तः पूर्वोपान्तरक्तता किंतु प्रतिबन्धाभावादुत्थितो नयनेष्वाश्रयेषु शुक्लतां निरास निरस्तवान्। अस्यतेर्लिट्। श्रियं शोभां तु न निरास। अतः शुक्लत्वविरोधिरागनिरोधार्थमेवाञ्जनं स्यात् न तु शोभार्थम्। तस्यास्तदभावेऽपि सद्भावादित्यर्थः। अञ्जनापगमेऽपि नयनानां रागः एवालंकारोऽभूदिति भावः। अत्राञ्जनन्यासमनूद्य तस्य शोभार्थत्वनिषेधेन रागरोधार्थत्वोत्प्रेक्षणमुक्तम्। उत्तरार्धे तस्यैव समर्थनात्। एवमुपान्तरक्ततां रोद्धुं यदञ्जनं न्यस्तमिति सम्बन्धे विध्यनुवादविरोधः स्यात् ॥ ३८ ॥

जल विहार के पहिले सखियों ने अपने अपने नेत्रों में जो काजल लगा रक्खा था वह नेत्र प्रान्त के समीप की अरुणिमा की गति को रोकने के लिये ही था इसमें सन्देह का नाम नहीं क्योंकि जल से उस काजल के धो जाने पर उपान्त प्रान्त की अरुणिमा की गति ने नेत्रों की शुक्लता पर पानी फेर दिया, किन्तु उनकी रमणीयता को अक्षुण्ण रक्खा इसलिये उक्त बात सत्य पूर्ण है ॥ ३८ ॥

द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः ।
उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकाराः सचिवा इवाययुः ॥ ३९ ॥

द्युतिमिति ॥ द्युतिं शोभां तेजश्च वहन्तो वेगिभिर्वेगवद्भिर्जलैर्जडैश्च। डलयोरभेदात्। 'जडं गोकजडे नीरे हिमे च जडोऽन्यवत्' इति विश्वः। प्रलोभान्मोहात्। हृता गृहीता उपप्लुता भ्रंशिताः। यद्वा,-कर्तरि क्तः। भ्रमन्तः इत्यर्थः। अन्यत्र,-धनग्रहणबन्धनादिना पीडिता वनितावतंसकाश्च्युताधिकारा भ्रष्टाधिकाराः सचिवा इव तत्क्षणं शोचनीयतामाययुः प्रापुः ॥ ३९ ॥

शुभानना साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु ।
नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ता परभागमूर्मिषु ॥ ४२ ॥

शुभेति ॥ शुभानना विलोलहारा नितान्तगौर्योऽरुणाद्वय । 'गौरोऽरुणे सिते पीते' इति वैजयन्ती । भीरवस्ताः स्त्रियः साम्बुरुहेषु चलाः फेनपङ्क्तयो येषु तेषु हृतानि कुसुमानि यैस्तेषु । कुङ्कुमसकमालत्वेष्वित्यर्थः । ऊर्मिषु विषयेषु । अलमत्यर्थं परभागं गुणोत्कर्षं न लेभिरे । 'परभागो गुणोत्कर्षे' इति यादवः । तासामूर्मीणां चारुणत्वादिगुणसाम्यान्न कश्चिद्विशेषो लक्ष्यत इत्यर्थः । अत एव सामान्यालङ्कारः,— 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । शुभाननत्वसाम्बुरुहत्वाद्युभयविशेषणानां क्रमेणोभयस्मिन् समन्वयाद्यथासंख्यालङ्कारश्च । 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति काव्यप्रकाशे लक्षणात् । अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४२ ॥

वे सुरसुन्दरियाँ, जिनके मुख कमल के सदृश रम्य थे, जिन्होंने मुक्ताओं का तरल हार धारण किया था, और जो अत्यन्त गौरवर्णा थीं, उन लहरों में जिनमें कमल खिल रहे थे, जिन पर चञ्चल फेनों की रेखा पड़ी हुई थी, और जो सुराङ्गनाओं के कुङ्कुमलेप को प्रक्षालित कर स्वयं अरुण हो रही थीं, अपने तईं उनमें कुछ भी गुणोत्कर्ष न पाईं ॥ ४२ ॥

ह्रदाम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहुः स्तनैस्तालसमं समाददे मनोरमं नृत्यमिव प्रवेपितम् ॥ ४३ ॥

ह्रदेति ॥ व्यस्ताभ्यां विपर्यासिताभ्यां वधूकराभ्यामाहते । एकेन कोणेनोत्ता-नौन्येन ताडित इत्यर्थः । ह्रदाम्भसि मृदङ्गध्वनिवद्धीरं गम्भीरं रवमुज्झति सति । तथा ध्वनति सतीत्यर्थः । मुहुः स्तनैस्तालके तीव्रवाद्यमुत्पन्ना कालपरिच्छेद । 'तालः कालक्रियामानम्' इत्यमरः । तस्य सममनुरूपं मनोरमं नृत्यमिव प्रवेपितं प्रकम्पः । भावे क्तः । समाददे स्वीकृतम् । उपमालङ्कारः ॥ ४३ ॥

जलविहार करती हुई सुरवनिताएँ गङ्गा के ह्रद-जल में अपने व्यस्त करों से ( अर्थात् हथेली नीचे की तरफ करके ) अभिघात करती थीं । उस क्षण मृदङ्ग के सदृश गम्भीर घोष निकल रहा था । उनके कुच ताल सम्यानुकूल नृत्यकारी नृत्य के समान बार बार प्रकम्पित हो रहे थे ॥ ४३ ॥

श्रिया हसद्भिः कमलानि सस्मितैरलंकृताम्बुः प्रतिमागतैर्मुखैः ।
कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥ ४४ ॥

श्रियेति ॥ श्रिया शोभया कमलानि हसद्भिः । कमलसदृशैरित्यर्थः । 'हसती-र्ष्यत्यसूयति' इति दण्डिना सादृश्यपर्यायपरा उक्ताः । सस्मितैः प्रतिमागतैः । प्रतिबिम्बगतैरित्यर्थः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा' इत्यमरः । मुखैरलङ्कृतान्यम्बूनि यस्याः सा । किंच, सुरराजयोषितां कृतमानुकूल्यं विहाराद्युपकारो यया सा । इत्थ

योपिनिस्सक्ता स्वयं च तासामुपचिकीर्षु र्जाह्नवी गङ्गा प्रसादस्य स्वच्छत्वस्य साफल्यम् । अर्थगौरवबलाद्वीसमासनिर्वाह । तथापि । अम्भस्यम्भसि विहारविम्ब अक्ष्णयोरसंभवादित्यर्थ । स्वच्छा एव परोपक्रियन्ते स्वयं चोपकुर्वते तेषामिति भाव । 'कृतानुकारा' इति पाठेऽनुकारोऽनुकूलकरणमुपकार इत्येव व्याख्येयम् । अत्र जाह्नवीविशेषणपदार्थस्य साफल्यं प्रति हेतुत्वात्काव्यलिङ्गमलङ्कार ॥ ४४ ॥

जो सुराङ्गनाओं के मुख अपनी कान्ति से कमल को भी हसते थे जो मन्द २ मुस्करा रहे थे और जिनका प्रतिबिम्ब जल में पड रहा था उनसे गङ्गा का जल विशोभित हो रहा था । देवनारियों के विहारानुकूल ही गङ्गा बनी हुई थीं । इससे उसका ( गङ्गा ) स्वच्छपन सफल हो गया ॥ ४४ ॥

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्राससविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥४५॥

परीति ॥ परित स्फुरद्भिर्विवर्तमानैर्मीनैर्विघट्टिता ऊरवो यासां ता अत एव त्रासविलोलदृष्टयो भयविकसन्नेत्रा कम्पितपाणिपल्लवाश्च सुराङ्गना सखीजनस्यापि विलोकनीयतामुपाययु । किमुत प्रियजनस्येति भाव । स्वभावोक्तिरलङ्कार ॥ ४५ ॥

जल विहार करती सुराङ्गनाओं के साथ जल के भीतर तैरती हुई मछलियों से जब ठेस लग जाता था तब वे अकस्मात डर कर और चकपका कर देखने लगती थीं और अपने कर किसलयों को मरमोरने लग जाती थीं । वह दृश्य उनकी सखियों के लिये भी मनोरम हो जाता था । उनके प्रेमियों के विषय में तो कहना ही क्या ॥ ४५ ॥

भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदानन्दयति स्म मानिनी ।
अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः ॥ ४६ ॥

भयादिति ॥ मानिनी । दुर्ग्रहमानेति भाव । अम्भसि जले झषेण मत्स्येनाहते सति । 'पृथुरोमा झषो मत्स्य' इत्यमर । भयादिव । वस्तुतस्तु न तथेति भाव । किंतु मुदैवानुनयेनैवाश्लिष्य प्रियमानन्दयति स्म । तथा हि—रामा प्रियोऽकृत्रिमोऽनारोपितो य प्रेमरसस्तेनाहितैर्जनितै कृतकै कृत्रिमैरपीहितैश्चेष्टितैर्मनो हरन्ति । आरोपितमपि भयं प्रेममूलत्वान्मनोहरं बभूवेत्यर्थ । अत्राश्लेषानुभावेन भयं सहजरागनिगूहनात्मीलनाख्य अलङ्कार मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणान्तरसंभवादर्थान्तरन्यासेन ससृज्यते ॥ ४६ ॥

एक मानिनी एक मत्स्य के द्वारा जल के आहत होने पर त्रास का अभिनय करती हुई अपने प्रिय का आलिङ्गन की । अत उसके प्रिय को आनन्द की सीमा न रही । रमणियाँ अपने कृत्रिम चेष्टाओं से मन मोह लेती हैं परन्तु जब उसमें नैसर्गिक प्रेम की मात्रा विद्यमान हो ॥ ४६ ॥

तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः ।
ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ४७ ॥

तिरोहितेति ॥ अपां विगाहान्नितान्तमाकुलैर्विकीर्णैः प्रसारिभिरायतैः । अलकैः केशैः । तिरोहितान्तानि छन्नप्रान्तानि वधूनां वदनानि द्विरेफवृन्दैरन्तरितानि छन्नानि सरोरुहाणि तैः सरोरुहैस्तुल्यतां ययुरित्युपमालङ्कारः ॥ ४७ ॥

जल विहार करते समय युवतियों के केशपाश, जो इधर उधर छिटक कर चारों तरफ फैले हुये थे, मुख कमलों को ढक दिया, उस समय उन युवतियों के मुख भ्रमरों से व्याप्त कमलों की समानता करने लगे ॥ ४७ ॥

करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसम्भ्रमा ।
सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ४८ ॥

कराविति ॥ मानिनी पयस्यगाधे सति । किलेत्यलीके । मज्जनभयादित्यर्थः । जातसम्भ्रमा उत्पन्नभया । अत एव नवपल्लवाकृती करौ धुनाना कम्पयन्ती । धुनोतेः क्र्यादिकात्कर्तरि लट् शानच् । सखीषु विषये निर्वाच्यमवाच्यम् । अनिन्द्यमित्यर्थः । धार्ष्ट्यदूषितं न भवतीति अधार्ष्ट्यदूषितं तत् । वस्तुतो रागमूलमपि भयमूलत्वारोपादिति भावः । प्रियाङ्गसंश्लेषमवाप । अत्रापि तुल्याङ्गेन भयेनागन्तुकेन सहजानुरागनिगूहनान्मीलनालङ्कारः । तदुक्तं काव्यप्रकाशे—'समानलक्षणं वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुना वापि सन्मीलनमुदाहृतम् ॥' इति ॥ ४८ ॥

एक दूसरी मानवती ने अगाध जल में जाकर डूब जाने के भय से नूतन किसलयाकारी हाथों को झटकती पटकती अपने प्रिय का आलिङ्गन किया । सखियों ने उसपर धृष्टता का दोषारोप नहीं किया ॥ ४८ ॥

प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः ।
सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ४९ ॥

प्रियैरिति ॥ प्रियैः कामिभिः सलीलं करवारिभिरञ्जलिजलैर्वारितोऽवरुद्धः । सिक्त इत्यर्थः । प्रवृद्धैः सततैर्निःश्वासैर्विकम्पितौ स्तनौ यस्य सः । सविभ्रमं सविलासमाधूतानि कराग्रपल्लवानि पाणिपल्लवानि येन सः । विलसनशीला विलासिनी । 'वौ कषलसकत्थस्रम्भः' इति घिनुण्प्रत्ययः । सैव जनः । जात्यायेकवचनम् । यथार्थतामाप । उक्तरीत्यानेकविलासवत्तया यथार्थनामकत्वमवापेत्यर्थः । 'क्वचिद्गम्यमानार्थस्याप्रयोगः' इति नाम्नो न प्रयोगः । यथा माघे—'विपाम याथार्थ्यमलं स्म दिग्गजे' इति । क्वचित्प्रयुज्यते च, यथा रघुवंशे—'परन्तपो नाम यथार्थनामा' इति ।

ढीली पड़ने से वह विवश नहीं होने पाई )। उस कामिनी ने उस समय वही काम किया जो एक सखी अपनी सखी की लाज रखने के लिये करती है ॥ ५१ ॥

निरञ्जने साचिविलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयति स्म विग्रहे वलिक्रिया चातिलकं तदास्पदम् ॥५२॥

निरञ्जन इति ॥ नतभ्रुवोऽङ्गनाया विग्रहे वपुषि निरञ्जने निर्धौतकज्जले दृशौ विलोचने कर्म साचिविलोकितं तिर्यग्वीक्षणं कर्तृ मण्डयति स्म । 'तिर्यगर्थे साचि तिर' इत्यमरः । अयावकं क्षालितलाक्षारागमोष्ठपल्लवं वेपथुः कम्पो मण्डयति स्म । 'द्वितोऽथुच्' इत्यथुच्प्रत्ययः । अतिलकं तिलकरहितं तदास्पदं तिलकस्थानं ललाटम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । वलिक्रिया रेखाबन्धश्च मण्डयति स्म । तथा निरलङ्कारस्यालङ्कारान्तरस्य तच्छरीरविकारैरेवालङ्कारः समजनीत्यर्थः ॥५२॥

इन वधूटियों ने अपने २ अङ्ग विशेषों की शोभा के लिये कहीं अञ्जन, कहीं महावर, और कहीं तिलक लगा रक्खा था जल विहार करने से ये सब धुल कर साफ हो गये —

सुराङ्गना के शरीर में अञ्जन विहीन आंखों को उसकी टेढ़ी चितवन ने सुशोभित कर दिया ओष्ठपल्लव के महावर धुलकर साफ हो गये थे तो भी कम्पने उसे सुशोभित किया। उसके ललाट का चन्दन प्रक्षालित हो गया था, तो भी ललाट की रेखा ने ललाट की शोभा को यथावत् बनाये रक्खा ॥ ५२ ॥

निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे ॥५३॥

निमीलदिति ॥ प्रियोपकण्ठं प्रियसमीपे । अत्यन्तसंयोगे द्वितीया । निमज्जतीनां विगाहमानानामत एव निमीलन्ति निमिषन्त्याकेकराणि आकेकराणि लोलानि चक्षूंषि यासां तासाम् । आकेकरलक्षणं तु नृत्यविलासे—'दृष्टिराकेकरा किंचित्स्फुटा-पाङ्गे प्रसारिता । मीलितार्धपुटा लोके तारान्यावर्तनोत्तरा ॥' इति । तासां स्त्रीणाम् । कृतो गात्राणां वेपथुः कम्पो येन सः । श्वसितैर्निःश्वासैरुद्धतावुत्पतितौ स्तनौ येन सः । श्रमः खेदो नु मदनो नु पप्रथे प्रादुर्बभूव । निमज्जनप्रियसंनिधानरूपोभयकारण-समवाजेत्रमीलनगात्रकम्पनिःश्वासधारणात्संदेहः । स एवालङ्कारः ॥ ५३ ॥

अपने २ प्रिय के समीप जल विहार करती हुई सुराङ्गनाओं के, जिनकी अर्द्धनिमीलित और आकेकर(१) युक्त लोल आंखें थीं, शरीर में कम्प हो रहा था। तथा श्वास प्रश्वास से उनका हृदय धड़क रहा था। उस समय यह नहीं निश्चय किया जा सकता था कि इन सब बातों का कारण क्या है ? श्रम अथवा कामदेव ॥ ५३ ॥

---

(१) आकेकर नृत्य के समय नेत्र के कटाक्ष पात का एक विशेष है 'नृत्यविलास' में इसका वर्णन है।

# नवम सर्ग ।

वीक्ष्य रन्तुमनसः सुरनारीरात्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्तं भानुमानुपपयोधि ललम्बे ॥ १ ॥

वीक्ष्येति ॥ अथ जलक्रीडानन्तरं भानुमानंशुमान् आत्तचित्रपरिधानविभूषाः स्वीकृतविविधवस्त्राभरणाः । सुरतसन्नाहवतीरित्यर्थः । अत एव रन्तुमनसः । 'समानकर्तृकेषु तुमुन्' । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मकारलोपः । सुरनारीः वीक्ष्य तासां प्रियार्थं तत्प्रियार्थमिव । अवसरदानरूपं प्रियं कर्तुमिवेत्यर्थः । फलोत्प्रेक्षेयम् । अस्तमदर्शनम् । मकारान्तमव्ययमेतत् । यातुं प्राप्तुम् । उपपयोधि पयोधिसमीपे ललम्बे सस्रंसे । अस्मिन्सर्गे स्वागतावृत्तम्—'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ १ ॥

भगवान् अंशुमाली (सूर्य) ने देखा—अब क्रीडा के बाद सुरनारियाँ अनेक तरह के चित्र विचित्र वस्त्राभूषणों को धारण कर रमणाभिलाषिणी हैं अतः मानो उनके अभिलषित मनोरथ सिद्धि में अवसर प्रदानार्थ अस्त होने के लिये पश्चिम समुद्र की ओर खिसकने लगे ॥

मध्यमोपलनिभे लसदंशावेकतश्च्युतिमुपेयुषि भानौ ।
द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ॥ २ ॥

मध्यमेति ॥ मध्यमोपलनिभे नायकमणिसदृशे । 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः । 'शकलार्धे स्त्रियां मोक्षः पुंस्यंशस्त्वम्बुपले मणौ' इति वैजयन्ती । लसदंशौ प्रसरद्रश्मौ भानौ । एकतः एकस्मिन्भागे च्युतिं स्रस्ततामुपेयुषि प्राप्ते सति द्यौः परिवृत्त्या मध्यादतिक्रमेण विलोलां गत्वरीम् । अन्यत्र पातस्य तिर्यग्गमनेन चञ्चलां वासरलक्ष्मीं हारयष्टिं मुक्तावलीमिवोवाह वहति स्म ॥ २ ॥

हारावली के मध्यमणि सदृश निरन्तर शोभी भगवान भास्कर के एक दिशा के परित्याग कर देने पर द्यौरूपी बाला ने (आकाश) मध्याह्न कालातिक्रमण करने से गमनशीला दिनश्री को हारावली की तरह धारण किया ॥ २ ॥

अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा ।
क्षीबतामिव गतः क्षितिमेष्यँल्लोहितं वपुरुवाह पतङ्गः ॥ ३ ॥

अंशुपाणिभिरिति ॥ पतङ्गः सूर्यः । 'पतङ्गः पक्षिसूर्ययोः' इत्यमरः । अतीव निर्भरम् । 'अत्यतीव च निर्भरे' इत्यमरः । पातुमिच्छुः पिपासुस्तृषितः सन् । पिबतेः सन्नन्तादुप्रत्ययः । अंशव एव पाणयस्तैः पद्मजं मधु मद्यमेव । मध्विति श्लिष्टरूपकम् । मकरन्दमद्यमित्यर्थः । 'मधु मद्ये पुष्परसे' इत्यमरः । भृशमत्यन्तं रसयित्वास्वाद्य क्षीबतां मत्ततां गत इवेत्युत्प्रेक्षा । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । क्षितिमेष्यन् गमिष्यन् । लोहितं रक्तं वपुरुवाह । यथा मत्तः क्षीबतया क्षितौ लुठति

रज्यते च तद्वदिति भाव । सूर्यस्य विविविलयवसस्तमय इत्यागम । अत्र रूपको-त्प्रेक्षयो सापेक्षत्वादङ्गाङ्गिभावेन सकर ॥ ३ ॥

मरीचिमाली ( सूर्य ) ने अत्यन्त तृप्त होकर अपने किरणरूप अञ्जलियों से कमलों के मकरन्द रूप मधको खूब छक कर मत्त हुए की भाँति पृथ्वी पर लुढ़के हुये ( अस्त होते हुये ) अरुण वर्ण का शरीर धारण किया ॥ ३

गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ ।

आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ॥ ४ ॥

गम्यतामिति ॥ सहस्रमरीचौ सूर्ये । लोहितो भवतीति लोहितायति । 'लोहिता-दिडाज्भ्य क्यष्' इति क्यष् । 'वा क्यष' इति परस्मैपदे शतृप्रत्यय । अत एव नय-नानां गम्यतामुपगते दर्शनीयतां प्राप्ते सति । अभितापो धरित्रीं विरहय्य विहाय । 'ल्यपि लघुपूर्वात्' इत्ययादेश । चक्रवाकहृदयान्यासससाद प्राप । अत्र धरित्र्या याबत्सत्यर्कसन्तापस्तावत्सकलसन्तापः चक्रवाकहृदयेषु विरहसन्ताप समाप्त इति परमार्थ । परन्तु तदुपकतासम्बन्धेनासम्भविर्माभात् न एवात्र सकाम्य इत्यमेदाध्यवसायेनोप-देश । अत एव भेदेऽभेदरूपातिशयोक्तिरलङ्कार ॥ ४ ॥

जब सहस्रांशु ( सूर्य ) लोहित वर्ण ( रक्त ) होकर नेत्रों के लिये अवलोकनीय हो गया, तब सन्ताप ने पृथ्वी को छोड़ कर चकवाक पक्षियों के हृदय में समावेश किया । तात्पर्य्य यह कि दिन भर तो सूर्य अपनी किरणों से पृथ्वी को तपाता रहा, अब चकवाकों के हृदय को विदग्ध करेगा, क्योंकि सुना जाता है कि चकवाक पक्षियां रात्रि के समय अपने प्रिय से अलग हो जाते हैं ॥ ४ ॥

मुक्तमूललघुरुज्झितपूर्वः पश्चिमे नभसि संभृतसान्द्रः ।

सामिमज्जति रवौ न विरेजे खिन्नजिह्म इव रश्मिसमूहः ॥ ५ ॥

मुक्तेति ॥ रवौ सामिमज्जति अर्धास्तमिते सति । 'सामि त्वर्धे जुगुप्सायाम्' इत्यमर । मुक्तं त्यक्तप्राय मूलमाश्रयभूतो रवि । अन्यत्र,-स्वामी, येन सोऽत एव लघुरल्पकश्च मुक्तमूललघुरुज्झितपूर्वस्त्यक्तपूर्वदिक् । अन्यत्र,-त्यक्तपूर्वजन । पश्चिमे नभसि नभोभागम् । अन्यत्र,-कश्चिज्जीवस्थले । संभृत सहत सन् । अत एव सान्द्रश्च रश्मिसमूह । आश्रितजनस्य व्यज्यते । खिन्नश्चासौ जिह्मश्च, खिन्नेन दु खेन जिह्मो वा, दीन इव न विरेजे । अत्र मुक्तमूलत्वादिभिस्तुल्यविशेषणसाम्याद्प्रस्तुताश्रि-तजनप्रतीते समासोक्ति । तत्र वाच्यस्य रश्मिसमूहस्याचेतनस्यापि प्रतीयमानेन चेतनेनाभेदाभिधानाद् खिन्नत्वाद्युत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सकर ॥ ५ ॥

जिस तरह आश्रित व्यक्ति अपने आश्रय का परित्याग कर देता है, उसका गौरव न्यून हो जाता है, और वह खिन्न होकर किसी नीच स्थान में पहुँच कर मलिन और उदास रहता है उसी तरह सूर्य बिम्बके अर्धभाग के अस्त हो जाने पर, सूर्य का किरणपुञ्ज, जो

शेष । दिनान्त सायङ्कालो दिनमुखेन प्रातःकालेन तुल्यतासाम्ययौ । तद्वद्बभूवेत्यर्थः । अत्र एवोपमालङ्कारः ॥ ८ ॥

बस अब क्या था झटपट सायङ्कालने अपना प्रभुत्व जमाया उसकी जरा शकल तो देखिये - दिनावसान प्रभात की समानता करता हुआ उपस्थित हो गया, दोनों समय एक काल में आहारार्थ और दूसरेकाल (सायङ्काल) में नीड निवासार्थ प्रस्थित विहङ्गम समूहों से व्याप्त रहते हैं। दोनों समयों में किसी भी राग का पता नहीं रहता वही दशा सूर्य्य भगवान् की रहती है (उनका भी पता नहीं रहता। अन्धकार भी दोनों कालों में नहीं रहता। (दोनों कालों के लक्षण एक से दिखाई पड़ते हैं) ॥ ८ ॥

आस्थित स्थगितवारिदपङ्क्त्या सन्ध्यया गगनपश्चिमभागः ।
सोर्मिविद्रुमवितानविभासा रञ्जितस्य जलधेः श्रियमूहे ॥ ९ ॥

आस्थित इति ॥ स्थगितवारिदपङ्क्त्या पिहितमेघपङ्क्त्या सन्ध्ययाऽऽस्थित आक्रान्तो व्याप्तो गगनपश्चिमभागः । सोर्मिः । ऊर्मिसक्रान्त इत्यर्थः । तथा विद्रुमवितानविभासा प्रवालप्रकरकान्त्या रञ्जितस्य स्वसावर्ण्यमापादितस्य जलधेः श्रियमूहे । सन्ध्याया रक्तवर्णत्वादिति भावः । ऊहते कर्तरि लिट् । तत्सदृशीं श्रियमुवाहेत्यर्थः । अत एव निदर्शनालङ्कारः ॥ ९ ॥

आकाश का पश्चिमीय भाग जो मेघमालाओं से आच्छादित था, सन्ध्याकाल से आक्रान्त [illegible] कर लहरों से सम्पन्न प्रवालपुञ्ज की किरणों [illegible] रञ्जित जलनिधि (समुद्र) [illegible] तरह शोभित हुआ ॥ ९ ॥

प्राञ्जलावपि जने नतमूर्ध्नि प्रेम तत्प्रवणचेतसि हित्वा ।
सन्ध्ययानुविदधे विरमन्त्या चापलेन सुजनेतरमैत्री ॥ १० ॥

प्राञ्जलाविति ॥ प्रबद्धोऽञ्जलिर्येन तस्मिन् प्राञ्जलौ बद्धाञ्जलौ । 'स्त्री पुताञ्जलिः पुमान्' इत्यमरः । प्रादिभ्यो धातुजस्य बहुव्रीहिर्वाच्यो वोत्तरपदलोपश्च । नतमूर्ध्नि नमस्कुर्वाणे तत्प्रवण तत्र सन्ध्यायामेवाहित चेतो यस्य तस्मिन्नेवंविधेऽपि जने विषये प्रेम हित्वा विहाय विरमन्त्या निवर्तमानया । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । सन्ध्यया चापलेनास्थैर्येण । युवादित्वादण्प्रत्ययः । सुजनादितरो दुर्जनस्तस्य मैत्री सख्यमनुविदधेऽनुचक्रे । कर्मणि लिट् । यथा दुर्जनमैत्री स्निह्यन्तमपि जहाति तद्वत् सन्ध्यापि सेवमानं जनमहासीदित्यर्थः । मित्रस्य कर्म मैत्री । अणन्तान्ङीप् । अत्र सन्ध्यादुर्जनमैत्र्योश्चापलं समानधर्मोऽनुविधानम् । अत एवार्थरूपेणोपमा ॥ १० ॥

जिस व्यक्ति ने हाथ जोड़ कर प्रणाम करने के लिये शिर झुका लिया है तथा उसमें अपनी आस्था भी रखता है ऐसे व्यक्ति विषयक प्रेम का परित्याग कर, उससे अपना पिण्ड छुड़ाती हुई सन्ध्या अपनी मैत्री अधिक काल तक एक जगह में स्थिर न रख कर दुर्जन के साथ मैत्री की ॥ अर्थात् सन्ध्या के लिये लोग प्रेम करते रहते हैं तथापि वह स्वयं

वियोगमापुरेव । न [illegible] नापुरित्ययोगव्यवच्छेदः । तथा हि—कालनियोगो दैवाज्ञा न लङ्घ्यते खलु । दुर्वार इत्यर्थः ॥ १३ ॥

रात्रिकाल में जिन पक्षियों के दम्पति स्वभावतः पृथक् हो जाते हैं, वे चाहते भी रहते हैं कि हम लोग वियुक्त न हों तथापि वे वियुक्त हो ही जाते हैं। दैव की आज्ञा कौन भङ्ग कर सकता है ॥ १३ ॥

यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ ।
नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिण्या ॥ १४ ॥

यच्छतीति ॥ शकुन्तौ चक्रवाकपक्षिणि । सामान्यस्य प्राकरणिकविशेषपर्यवसानात् । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । अन्तिकगते समीपस्थेऽपि दयितायै चक्रवाक्यै प्रतिमुखमभिमुखं यथा तथा वाचं यच्छति वाचमेव ददाने । न तु सङ्गममात्रे सतीत्यर्थः । 'पाघ्राध्मा–' इत्यादिना दाणो यच्छादेशः । अम्बुरुहिण्या नलिन्या । उज्झितहर्षं चक्रवाकदुर्दशादर्शनादिव त्यक्तविकासं पङ्कजं मुखमिव नतिं नमनं नीयते स्म नीतम् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट् । प्रायेण तु सदर्शनास्त्रिय स्त्रियन्ते । विशेषेण विरहदर्शनादिति भावः । अत्र पङ्कजनमनस्य चक्रवाकविशोकानन्तर्यात्तद्धेतुकत्वमुत्प्रेक्ष्यते । तच्च मुखोपमेयमम्बुरुहिण्याः कामिनीसाम्यं गमयन्त्या निरूढमिति इत्युपमोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः । स्वतःसम्भोगासम्भवात्प्रतीयमानोत्प्रेक्षा ॥ १४ ॥

उस काल चक्रवाकपक्षी अपनी वल्लभा के समीप ही था और सामने से उससे केवल वार्तालाप कर सकता था ( न कि उसका स्पर्श कर सकता था ), उसकी इस दयनीय दशा को देख सरोरुहिणी का पुष्प, जो मुख के सदृश होता है, अपनी पखुड़ियों को सङ्कुचित कर मनोवेदना प्रगट करने लगा ॥ १४ ॥

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ १५ ॥

रञ्जिता इति ॥ तिमिरेणान्धकारेण विविधास्तरवः शैलाश्च रञ्जिताः स्वसावर्ण्यमापादिता नु । अन्यथा कथमेषां नीलरूपत्वमिति भावः । गगनं नामितं नु । आभूतलादिति शेषः । 'मितां ह्रस्वः' इत्यत्र वाशब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणाद् ह्रस्वः । यद्वा,–गगनं स्थगितमाच्छादितं नु । उभयत्रापि तमसावृतत्वान्न दृश्यत इति भावः । तथा धरित्री विषमेषु निम्नोन्नतेषु पूरिता समीकृता नु । अन्यथा तद्विवेकः कथं न स्यादिति भावः । ककुभो दिशश्च संहृता नु लुप्ता किम् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । कथमन्यथा न दृश्यन्त इति भावः । अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकमारोप्य संदिग्ध इति संदेहालङ्कारः । अनेन 'नु' शब्दस्य सम्भावनाद्योतकत्वमतोऽत्रोत्प्रेक्षाप्रकारमित्यलङ्कारसंसर्गः सङ्करः ॥ १५ ॥

अन्धकार एक विलक्षण जादूगर भी मालूम होता है, उसका जादू तो देखा जाय। वह कामरू देश से सीख कर अभी आया है—

अनेक प्रकार के वृक्ष और पर्वतों को अपने सरीखे काले रङ्ग में रंग डाला क्या? आकाश को नीचे की तरफ झुका तो नहीं दिया? (यह क्यों) आकाश पर काला पर्दा तो नहीं डाल दिया? सब दिशाओं को चुग कर अपने झोले में तो नहीं टाल लिया? (देखिये इसकी तमाशा किया जाय) पृथ्वी के ऊँचे नीचे स्थानों को समतल बना दिया क्या? ॥ १५ ॥

रात्रिरागमलिनानि विकासं पङ्कजानि रहयन्ति विहाय ।
स्पष्टतारकमियाय नभः श्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १६ ॥

रात्रीति ॥ श्रीः शोभा कर्त्री रात्रेः सन्ध्याया रागेण रक्तच्छायोपरागेण मलिनानि अत एव विकासं रहयन्ति त्यजन्ति । रहतेस्त्यागार्थाण्णिजन्तात्ल्लटः । पङ्कजानि विहाय त्यक्त्वा स्पष्टतारकं नभः खम् । इयाय प्राप । तथा हि—सर्वो जनो निरापदि निर्बाधके वस्तु स्थातुम् । इच्छति इत्यर्थः । एकार्थ उपदेशेऽनुदात्तात् इतीट्प्रतिषेधः । वसिष्व सामोधु वसि प्रसारिणि इति वचनात् । इत्याहुरिति ॥ १६ ॥

जब तक कमलों का अच्छा समय था तब तक शोभा उनके साथ रही अब वह भी मारे डर के दूसरी जगह चली गई। मान लीजिये देखिये कहां जाती है?—

पङ्कजों रात्रि के राग से उदास होकर प्रफुल्लता का त्याग करते हुए कमलों को छोड़कर आकाश मण्डल में चली गई जहां पर तारे चमचमा रहे थे। सब लोग सुरक्षित स्थान में निवास करने की अभिलाषा रखते हैं (मुसीबत में कौन किसकी मदद करता है?)॥

अस्ताद्रिव्यापिन्यां चन्द्रिकायां चन्द्रोदयवर्णनमारभते—

व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्तिर्वासवस्य दिशमंशुसमूहः ॥ १७ ॥

व्यानश इति ॥ शशधरेण चन्द्रेण विमुक्तः क्षिप्तः केतकीकुसुमकेसर इव पाण्डुरः लम्भिता प्रापिता कान्तिर्यस्य सोंऽशुसमूहो रश्मिसमूहः । चूर्णस्य कर्पूररजोविशेषस्य मुष्टिरिव । मुष्टि शब्दस्य द्विलिङ्गत्वेऽप्यत्र पुल्लिङ्गत्वमेव ग्राह्यम् । उपमेयानुसारात् । वासवस्येन्द्रस्य दिशं प्राचीं व्यानशे व्याप । अनेन दिशांनायकसुरयोर्वैदिकानायकौपम्यं गम्यते ॥ १७ ॥

अन्धकार ने बड़ा उपद्रव मचाया। अपने शासन के समय में जो मन में आया कर डाला। समझता था कि मेरा कोई कुछ नहीं कर सकता। किन्तु सब दिन एक समान नहीं जाता जो बहुत उधम करता है परमेश्वर उसका नाश करके छोड़ता है। अतः सरोष हो लिये हुए चन्द्रदेव ने अन्धकार की होली जलायी। अब वे हाथ में अबीर-गुलाल लेकर होली खेलने की तय्यारी करने लगे—

चन्द्रमा ने केतकी पुष्प के पराग के सदृश पाण्डुर वर्ण की किरणों को हाथ में लेकर कपूर के चूर्ण ( पाउडर ) की तरह उड़ा दिया । उससे प्रकाश आगया । उन किरणों का समूह ( झट ) इन्द्र की दिशा ( पूर्व ) को व्याप्त कर लिया ॥ १७ ॥

उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे ।
दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥ १८ ॥

उज्झतीति ॥ इन्द्रस्येयमैन्द्री दिक् प्राची तारकराजे नक्षत्रनाथे । 'कनीनिकायां नक्षत्रे तारकं तारकापि च' इति विश्वः । अन्तिकं समीपं व्रजति सति । आशु तमिस्रामन्धतमसम् । 'तमिस्रा स्त्री ध्वान्तनिशि निबिडान्धतमसे न ना' इति वैजयन्ती । शुचमिव । विरहदुःखमिवेत्यर्थः । उज्झती विजहती । प्रसादो नैर्मल्यमेव गुणः स एव मण्डनं यस्य तत् । रश्मयो हास इव तेन विशदं मुखमिव मुखमग्रभागम् । श्लिष्टोपमेयम् । ऊहे वहति स्म । अत्र दिक्चन्द्रयोर्नायिकानायकौपम्यं गम्यते ॥ १८ ॥

प्राची दिशाने चन्द्रमा को समीप आते हुए देख अन्धकार को दूर भगा कर निर्मलता रूप गुण से युक्त तथा हास के समान किरणों से विशद मुख धारण किया अर्थात् जिसतरह किसी प्रोषितपतिका रमणी का मुख मण्डल उसके पति देव के समीप आने पर विरहोत्थ शोक का परित्याग करके हास युक्त होकर प्रसन्न हो जाता है उसी तरह प्राची दिशा का मुख अर्थात् अग्रभाग चन्द्रमा के उदय होने पर अन्धकार को दूर भगा कर प्रकाशित हो ॥ १८ ॥

नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥ १९ ॥

नीलेति ॥ शैलरुद्धवपुष उदयगिरितिरोहितमण्डलस्य सितरश्मेरिन्दोः सम्बन्धि नीलनीरजनिभे श्यामकमलतुल्ये खे आकाशे निपतत् प्रसरत् । हिमवद्गौरं शुभ्रं करजालमंशुसमूहो वारिधेः पयसि निपतद्गाङ्गमम्भ इव रराज । उपमानेऽपि विशेषणानि योज्यानि ॥ १९ ॥

हिमांशु ( चन्द्र ) की, जिसका मण्डल उदयाचल के ओट में था, तुषार के सदृश शुभ्र किरणों का पुञ्ज नील कमल सदृश नील नभ में प्रसरण करता हुआ इस प्रकार शोभित हुआ जिस प्रकार ( नील ) समुद्र में गिरता हुआ जाह्नवी का ( शुभ्र ) जल विशोभित होता है ॥ १९ ॥

द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा शम्भुनेव करिचर्म चकासे ॥ २० ॥

द्यामिति ॥ द्यां निरुन्धत् आकाशमावृण्वत् । अतिनीलघनाभं मेचकम् । उद्यन्तः करा अंशवो हस्ताश्च यस्य तेन । असिताभ्य इतरा शुभ्रा भासो यस्य तेन चन्द्रेण

से गगन मण्डल को उद्भासित करते हुए धीरे धीरे पूर्वीय समुद्र से सुवर्ण कलश के समान ऊपर उठ आये ॥ २३ ॥

उद्गतेन्दुमविभिन्नतमिस्रा पश्यति स्म रजनीमवितृप्त ।
व्यंशुकस्फुटमुखीमतिजिह्मा व्रीडया नववधूमिव लोक ॥ २४ ॥

उद्गतेन्दुमिति ॥ लोको जन । 'लोकस्तु भुवने जने' इत्यमर । उद्गतेन्दुमुदितचन्द्राम् । अविभिन्नतमिस्रामनिर्भेदितध्वान्ता रजनीं व्यंशुकमपनीतावगुण्ठनमत एव स्फुटं दृश्यमानं मुखं यस्या सा तां तथापि व्रीडयातिजिह्मां वक्रां नववधूं नवोढाम् । 'वधूर्नवोढयोषायां स्नुषाभार्याङ्गनासु च' इति धरणि । स्त्रियमिवावितृप्त सन् पश्यति स्म ॥ २४ ॥

चन्द्रोदय हो जाने पर भी अब तक अन्धकार भली भाँति नष्ट नहीं हो गया था तब तक निशा ( रात्रि ) को जनता ने एक ( नूतन परिणीता ) नव विवाहिता वधू की तरह, जिसके मुख का घूँघट हट गया हो तथा वह लज्जा के भार सी दबी जाती हो, सतृष्ण दृष्टि से देखा ॥ २४ ॥

न प्रसादमुचित गमिता द्यौर्नोद्धृत तिमिरमद्रिवनेभ्य ।
दिङ्मुखेषु न च धाम विकीर्णं भूषितैव रजनी हिमभासा ॥ २५ ॥

नेति ॥ हिमभासा चन्द्रेण द्यौराकाशम् । उचित योग्य प्रसाद न गमिता । अद्रयो वनानि च तेभ्य । तिमिर नोद्धृत नोत्सारितम् । दिशां मुखेषु धाम तेजश्च न विकीर्णं न प्रसृतम् । तथापि रजनी भूषितैव । उक्तगुणासम्पत्तावपीति भाव । अत्र प्रसाधनकारणाभावेऽपि तत्कार्यभूषणोक्त्या विभावनालङ्कार ॥ २५ ॥

यद्यपि चन्द्र देव के द्वारा अन्तरिक्ष पूर्णतया विभासित न हो चुका था। पर्वतों तथा जङ्गलों से अन्धकार भी दूर नहीं किया जा चुका था। और दिगन्तों में प्रकाश भी न पहुँच पाया था तथापि रजनी ( रात्रि ) देवी अलङ्कृता सी दिखलाई पड़ती थी ॥ २५ ॥

मानिनीजनविलोचनपातानुष्णबाष्पकलुषान् प्रतिगृह्णन् ।
मन्दमन्दमुदित प्रययौ ख भीतभीत इव शीतमयूख ॥ २६ ॥

मानिनीति ॥ उदित शीतमयूख उष्णेन विरहतप्तेन बाष्पेण कलुषानाविलान् । मानिनीजनस्य कलहान्तरितनायिकाजनस्य विलोचनपातान् । मानभङ्गजनितरोषेण वीक्षणानिति भाव । 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता । कलहान्तरिता' इति दशरूपके। प्रतिगृह्णन् स्वीकुर्वन्। अपरिहार्यत्वादिति भाव । अत एव भीतभीतो भीतप्रकार इवेत्युत्प्रेक्षा। मन्दमन्द मन्दप्रकारम्। उभयत्रापि 'प्रकारे गुणवचनस्य' इति द्विर्भावे कर्मधारयवद्भावात्सुब्लोप । खमाकाश प्रययौ ॥ २६ ॥

मानवती युवतियों के कटाक्ष पातों को, जो वियोग के कारण गरम गरम आंसू के

निकलने से कलुषित हो रहे थे सहन करते हुए हिमरश्मि ( चन्द्रमा ) उदित होकर भी डरते डरते हुए को भाँति धीरे धीरे आकाश में पहुँच गये ॥ २६ ॥

शिलष्यतः प्रियवधूमिव कण्ठं तारकास्ततकरस्य हिमांशोः ।
उद्गमश्रभिरराज समन्तादङ्गराग इव लोहितरागः ॥ २७ ॥

श्लिष्यत इति ॥ तताः प्रसारिताः कराः एव कराः अग्रहस्ता येन तस्य तताकरस्य तारका एव प्रियवधूस्तस्याः कण्ठमन्तिके कण्ठे वा । अभितःपरितःसमयायोगे द्वितीया । विभक्त्यर्थे अव्ययीभावः । श्लिष्यतः प्रत्यासीदत आलिङ्गतश्च हिमांशोः सम्बन्धी समन्तादुद्गमन् उत्सर्पन् । अर्थान्तरस्यादकसकत्वम् । धातोरर्थान्तरे वृत्तेः इति वचनात् । लोहित रागोऽरुणप्रभः । अङ्गराग इवाविरराज । आलिङ्गनादङ्गरागो मलतीति प्रसिद्धिः । अत्र रूपकोपमयोरङ्गाङ्गिभावेन सङ्करः ॥ २७ ॥

चन्द्रमा ने अपने किरण रूपी हाथों को फैला कर अपनी तारका रूपिणी नायिका का कण्ठदेश पूर्वक आलिङ्गन किया उस समय उसके किरणों की लालिमा उबटन लेपकी भाँति अङ्गराग ( उबटन ) की तरह विशोभित होने लगी । तात्पर्य यह कि चन्द्रमा की किरणें निकल कर ताराओं से मिलने लगीं और सघन लालिमा आयी । इसी दृश्यको एक नायक के द्वारा नायिका के आलिङ्गन से उपमित किया है ॥ २७ ॥

प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि ।
क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ २८ ॥

प्रेरित इति ॥ शशधरेण चन्द्रेण प्रेरितो निसृष्टः करौघः संहतानि सान्द्राणि अपि तमांसि मन्दरेण मन्दराचलेन भिन्नो क्षुब्धः क्षीरसिन्धुरविरलाः सान्द्रा उच्चाश्च तरवो येषु तानि काननानीव नुनोद दूरीचकार ॥ २८ ॥

चन्द्रमा से प्रेरित होकर किरण समूह ने ढेर के ढेर था अन्धकार को दूर किया जैसे ( समुद्र मन्थन के समय ) मन्दराचल से भिन्न होकर क्षीर सागर ने ( समीप के ) उन वृक्षों को जिनमें घने घने और ऊँचे २ वृक्ष थे ( अपने स्वच्छ सोर रूप जल से ) दूर किया ॥ २८ ॥

शारतां गमितया शशिपादैश्छायया विटपिनां प्रतिपेदे ।
न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ २९ ॥

शारतामिति ॥ शशिपादैश्चन्द्ररश्मिभिः । पादा रश्म्यङ्घ्रितुर्यांशाः इत्यमरः । शारतां शबलतां गमितया । शारः शबलपीतयोः इति विश्वः । विटपिनां तरूणां छायया न्यस्तैर्निहितैः शुक्लबलिभिः श्वेतपुष्पपुष्पहारैश्चित्राणि तलानि उपरिभागा यासां ताभिः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् इत्यमरः । वसतिवेश्ममहीभिर्निवासगृहभूमिभिः । तुल्यता साम्यं प्रतिपेदे प्राप्ता । कर्मणि लिट् । आर्थीयमुपमा ॥ २९ ॥

चन्द्रमा की किरणों से वृक्षों की छाया अनवच्छिन्न होकर ( वृक्षों के पत्तों और शाखाओं के अन्तराल से चन्द्रमा की किरणें छन छन कर उसकी छाया पर पड़ती हैं उस समय वह कहीं २ सफेद और कहीं २ काली रहती है ) उन विवाम के घर की भूमि की समानता करती है जहाँ पर देवताओं की पूजा की गई हो और पूजनोत्तर भी कहीं २ फूल इधर उधर बिखरे हुए चित्र कारी की हुई की भाँति दिखलाई पड़ते हों ॥ २९ ॥

आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥ ३० ॥

आतप इति ॥ आतपे । दुःसहेऽपीति भाव । वध्वा चक्रवाक्या सह । अत एव धृतिमता सन्तोषवता यामिनीषु विरहिणा नियतविरहेणात एव विहगेन चक्रवाकेण हिमरश्मेश्चन्द्रस्य किरणा न सेहिरे । तथा हि—दुःखिते सजातदुःखे मनसि सर्वम् । मनोहरमपीति भाव । असह्यं सोढुमशक्यम् । 'शक्तिसहोश्च' इति यत्प्रत्यय । पूर्वे तु 'आतपा' इति पेठु । तत्र वध्वा सहातपा अपि सेहिरे । तद्विरहिणा तु शशिकिरणा अपि न सेहिरे इति योज्यम् । फल तु समानम् ॥ ३० ॥

रात्रिकाल के वियोगी चक्रवाक पक्षी ने अपनी स्त्री के साथ रहकर धैर्य्य पूर्वक सूर्य की प्रखर किरणों को सह लिया परन्तु ( रात्रि में वियोगावस्था में ) चन्द्रमा की ( शीतल ) किरणों को न सह सका क्योंकि जब हृदय वेदना से व्यथित रहता है तब सभी वस्तुयें दुःसह हो जाती हैं ॥ ३० ॥

गन्धमुद्धतरज. कणवाही विक्षिपन्विकसतां कुमुदानाम् ।
आदुधाव परिलीनविहङ्गा यामिनीमरुदपां वनराजीः ॥ ३१ ॥

गन्धमिति ॥ अपां कणवाही । शीतलत्वेऽपि व्यवधानमपि सोढव्यम् । विकसतां कुमुदानां गन्धं सौरभम्, उद्धत रजः परागो यस्मिन्कर्मणि तद्यथा तथा । 'शेषाद्विभाषा' इति विकल्पात्कप् । विक्षिपन् विकिरन् । शैत्य शिशिरं सुरभि । यामिनीमरुत् रात्रिवायु । परितो लीना शयिता विहङ्गा यासु ता वनराजी । आदुधाव ईषत्कम्पयामास । विहङ्गशयनाविरोधेन वनराजि किंचित्कम्पितेत्यर्थ इति । 'आङीषदर्थेऽभिव्याप्तौ' इत्यमर । तथा कश्चित्कामिन्याँ गन्धोदकादिना सिञ्चन्नाकम्पयति तद्वदिति भाव ॥ ३१ ॥

जल के कणों का वहन कर्त्ता रात्रिकालीन वायुने खिली हुई कुमुदिनी के सौरभ को, जिसमें पराग उड़रहा था, बिखेरता हुआ वनराजियों को, जिनमें पक्षियाँ सो रही थीं, थोड़ा थोड़ा झकझोर दिया ॥ ३१ ॥

सन्निधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघम् ।
यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ३२ ॥

सन्निधातुमिति ॥ यामिनी वनितेव तया रात्रिरूपया कान्तया मन्मथस्याभिषेक

त्रिभुवनजैत्रयात्राभिषेकं संविधातु सम्यक्कर्तुम् । अतएवो ज्वलतीव तेजसामोघः पूरो ल्लसन् यस्मिन्स । क्षतचिह्नः स्फुटकान्त्या इन्दुः सोऽप्यच्छो रजतकुम्भ इव । उदास उत्क्षिप्तः । अस्यते कर्मणि लिट् । अत्र स इत्यत्रतुमिति तुमुना प्रतीयमानोऽभ्युदयाद्युत्था णितोऽप्युपमोत्प्रेक्षयोः सङ्करः ॥ ३२ ॥

राका रमणी ( रात्रि रूपिणी स्त्री ) ने कामदेव का अभिषेक करने के लिये जिसकी किरणें ही जल राशि है और जिसका चिह्न कमल के समान है ऐसे चन्द्रमा को रजत कलश के समान उठा लिया । ( यहा पर आचार्य ने चन्द्रमा को कलश से उपमित किया है उसकी ज्योत्स्ना को जल से और उसके चिह्न को नीलकमल के पुष्प से । कामदेव मानो है उसके विजय के लिये अभिषेकार्थ रात्रिरमणी अपनी सामग्री से तैयार है) ॥ ३२ ॥

ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्री ।
यद्विभु शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ॥ ३३ ॥

ओजसेति ॥ ओजसा । अनूनं संपूर्णमपि । असहायं सहायरहितम् । पुरुषमिति शेषः । जयश्रीर्नोपयाति खलु नूनम् । कुतः । यत् यस्मात् । विभुः समर्थोऽप्यनङ्गः शशिमयूखानां सखा सहचरस्तथोक्तः । सन्सहाय सन्नित्यर्थः । विजयि विजयशीलम् । जितेन्द्रि इत्यादिनेनिप्रत्ययः । चापमाददे । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तर न्यासः ॥ ३३ ॥

सामर्थ्य सम्पन्न होने पर भी सहायक विहीन पुरुष के पास विजय श्री नहीं जाती यह निर्विवाद है । क्योंकि समर्थ भी रतिवल्लभ ( काम ) ने हिमांशु से मित्रता करके ही विजयी धनुष को ग्रहण किया ॥ ३३ ॥

इत्थमुद्दीपनसामग्रीमुपवर्ण्य संप्रति तत्कार्यभूतं रतिप्रपञ्चमारभते—
सद्मनां विरचनाहितशोभैरागतप्रियकथैरपि दूत्यम् ।
सन्निकृष्टरतिभिः सुरदारैर्भूषितैरपि विभूषणमीषे ॥ ३४ ॥

सद्मनामित्यादि ॥ सन्निकृष्टरतिभिरासन्नसुरतैस्तथैव च सुरदारैः सुराङ्गनाभिः । आहितशोभैः प्रागेव विहितकेलिगृहमण्डनैरपि पुनः सद्मनां केलिगृहाणां विरचना मण्डनम् । ईषेऽभिलेषे । इषेः कर्मणि लिट् । आगतप्रियकथैः प्राप्तप्रियजनवृत्तान्तैरपि दूतस्य कर्म दूत्यं दूतीव्यापार ईषे । दूतस्य भावकर्मणोर्यत्प्रत्ययः । तथा भूषितैरपि विभूषणं प्रसाधनम् । ईषे । औत्सुक्यातिरेकादिति भावः ॥ ३४ ॥

इस तरह उद्दीपन सामग्रियों का वर्णन करके तत्कार्य रूप रति का वर्णन प्रारम्भ करते हैं —

देव सुन्दरियों ने जिनके विलास का समय सन्निकट था केलिभवन को विभूषित कर रक्खा था तो भी केलिगृहों की रचना के लिये अभिलाष किया । अपने प्राणेश्वरों का

समाचार प्राप्त करके भी वे दूती भेजने के लिये तय्यारी करने लगीं। वे भूषणों से विभूषित होकर भी पुनः अपने को विभूषित करने की अभिलाषा करने लगीं ॥ ३४ ॥

न स्रजो रुरुचिरे रमणीभ्यश्चन्दनानि विरहे मदिरा वा ।
साधनेषु हि रतेरुपधत्ते रम्यतां प्रियसमागम एव ॥ ३५ ॥

नेति ॥ विरहे वियोगावस्थायां स्रजो माल्यानि चन्दनानि गन्धा मदिरा मद्यानि वा रमणीभ्यः । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वाच्चतुर्थी । न रुरुचिरे न रोचन्ते स्म । हि यस्मात् प्रियसमागम एव रतेः साधनेषु स्रगादिषु रम्यतां मनोहरत्वम् । रुचिकरत्वमिति यावत् । उपधत्ते आधत्ते । तदभावादरुचिर्युक्तैवेत्यर्थः । अत एव वैध-र्म्यात्कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । रम्यन्त एष्विति रम्याणि । 'पोरदुप-धात्' इति यत्प्रत्ययः, 'कृत्यल्युटो बहुलम्' इत्यधिकरणार्थः ॥ ३५ ॥

उन अप्सराओं को अपने प्राणेश्वर को विरहावस्था में न तो पुष्प माला, न चन्दन और न मद्य ही रुचिकर प्रतीत हुआ। क्योंकि रति के सहायक सामग्रियों में प्रियका समागम ही रमणीयता की उपलब्धि करता है ॥ ३५ ॥

प्रस्थिताभिरधिनाथनिवासं ध्वसितप्रियसखीवचनाभिः ।
मानिनीभिरपहस्तितधैर्यः सादयन्नपि मदोऽवललम्बे ॥ ३६ ॥

प्रस्थिताभिरिति ॥ अधिनाथनिवासं प्रियगृहं प्रति प्रस्थिताभिः प्रचलिताभिर्ध्व-सिताभिः खण्डिताभि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवायेत्येवंरूपाणि याभि-स्ताभिः । मानिनीभिः कोपनाभिः । 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति लक्षणात् । अपहस्तितं निरस्तं धैर्यं येन सः । तथा सादयन् मानं शरीरं च कर्शयन्नपि सदोषोऽपीत्यर्थः । मदोऽवललम्बे स्वीकृतः । मद्यास्वादनव्याजेन लाघवा-पह्नवमकार्षीदिति भावः ॥ ३६ ॥

जो अप्सरायें मानकर बैठी थीं ( मानमोचनोपरान्त ) वे अपनी प्रिय सहेलियों की बातों की आनाकानी करके पतिदेव के घर के लिये चल पड़ीं। ( मद्य ) मद, जिसने उन्हें धैर्य भ्रष्ट कर दिया और जिसने उनके शरीर और मान को कृश कर दिया था, वे उसी का सहारा लीं ॥ ३६ ॥

कान्तवेश्म बहु सन्दिशतीभिर्यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां प्रायशः स्खलितमप्युपकारि ॥ ३७ ॥

कान्तेति ॥ रतये सुरताय बहु सन्दिशतीभिरनेकं कथयन्तीभिः । सन्देशव्यसना-द्गन्तव्यमप्यजानतीभिरित्यर्थः । रमणीभिः । कान्तवेश्म यातं प्राप्तमेव । न तु मध्ये-मार्गान्निवृत्तमित्यर्थः । तथा हि—मन्मथेन परिलुप्तमतीनां स्खलितं विरुद्धाचरणमपि प्रायशः उपकारि भवति ॥ ३७ ॥

अनेक प्रकार के वार्तालाप करती हुई अप्सरायें रमणार्थ पति के घर पहुँच ही गईं

तत्र नहीत्येक वाक्यम् । यद्युक्त सखीत्यर्थ । हे सखि, किं तत्रैतु युक्तम् । कु सुमशमानिनि प्रिये को मान । तादृग्जनस्य दुर्लभत्वादिति भाव । इति एवंरूपासु योषिता कथासु विषये समेतै । समीपमागत्याकर्णयद्भिरित्यर्थ । कामिभिर्बहुरसा नेकास्वादा धृति सतोष ऊहे ऊढा । अत्र परोक्षौत्सुक्यनिर्वेदाद्यनेकभावशावल्यपरिपूर्णकान्ताकथाकर्णनादुत्तरोत्तरमपूर्वहृदयानन्दनिष्यन्दमानन्दसंदोहमविन्दन्नित्यर्थ । प्रायेणात्र प्रौढा कलहान्तरिताश्च नायिका ॥ ४० ॥

नायिका—"तो फिर उसके पास जाना ठीक नहीं, वहाँ जाने का प्रयोजन ही क्या ?"

सखी—ऐ अपने को सुन्दरी मानने वाली ! प्रिय के विषय में मान ही क्या ? ( अर्थात् मान नहीं करना चाहिये )

सुर सुन्दरियाँ परस्पर इस प्रकार का वार्तालाप कर ही रही थीं कि उनके प्रेमीजन स्वय उपस्थित हो गये और उनके वार्तालाप को सुनकर असीम आनन्द प्राप्त किये ॥४०॥

योषित पुलकरोधि दधत्या घर्मवारि नवसङ्गमजन्म ।
कान्तवक्षसि बभूव पतन्त्या मण्डन लुलितमण्डनतैव ॥ ४१ ॥

योषित इति ॥ पुलकरोधि रोमाञ्चव्यापि नवसंगम एव जन्म यस्य तत् । घर्मवारि स्वेदोदक दधत्या इति सात्त्विकोक्ति । कान्तवक्षसि पतन्त्या इत्यौत्सुक्योक्ति । योषितो या लुलितमण्डनता स्रस्तप्रसाधनत्वम् । भावे तल् । सैव मण्डन बभूव । तादृशक स्वाभाव्येति भाव ॥ ४१ ॥

( पति के प्राप्त कर लेने पर ) रमणियाँ अपने अपने पति के वक्षस्थल पर लेटी हुई थीं और रोमाञ्च हो जाने पर नये २ सम्पर्क ( संगम ) से उत्पन्न श्रमकण धारण करती थीं जिससे उनके मण्डन ( शोभा ) की सामग्री मिट गई, किन्तु वही उनकी शोभा हो गई ॥ ४१ ॥

शीधुपानविधुरासु निगृह्णन्मानमाशु शिथिलीकृतलज्ज ।
सङ्गतासु दयितैरुपलेभे कामिनीषु मदनो नु मदो नु ॥ ४२ ॥

शीध्विति ॥ शेरतेऽनेनेति शीधु पक्वेक्षुरसविकारो मद्यविशेषस्तस्य पानेन विधुरासु विमूढासु । तथा दयितै सगतासु स्वयप्राप्तासु च कामिनीषु अतिमानवतीषु । आशु मान कोप निगृह्णन् निवर्तयन् । शिथिलीकृता लज्जा येन स मदनो नु मदो नु । उपलेभे । लभ्यते स्मेत्यर्थ । प्रियसमागमशीधुपानरूपोभयकारणासङ्गादुभयथा माननिग्रहाद्यनुभावसाधारण्याच्च सदेह । स एवालङ्कार ॥ ४२ ॥

शीधु ( ईख के रस से बनाया जाता है और वह एक प्रकार का शराब है ) पान करने से वे अप्सरायें मतवाली हो गई थीं और अपने प्रेमियों के पास स्वय पहुँच गई थीं। उनमें, उनके मान को शीघ्र ही भङ्ग करते हुए, तथा उनकी लज्जा को भी दूर करते हुए काम

देव और मन दोनों क्षुभित होने लगे ( परन्तु यह नहीं कहा जा सकता था कि यह दशा उनकी किसके द्वारा हुई काम के द्वारा अथवा मद ( नशा ) के द्वारा ' ॥ ४२ ॥

द्वारि चक्षुरधिपाणि कपोलौ जीवितं त्वयि कुतः कलहोऽस्याः ।
कामिनामिति वचः पुनरुक्तं प्रीतये नवनवत्वमियाय ॥ ४३ ॥

द्वारीति ॥ द्वारि त्वदागमनमार्ग एव चक्षुः इत्यौत्सुक्योक्तिः । अधिपाणि पाणौ करे कपोलौ इति चिन्तोक्तिः । किं बहुना जीवितं त्वयि त्वदधीनम् । त्वां विना न जीवतीत्यर्थः । इति गाढानुरागोक्तिः । अतोऽस्याः कलहो विग्रहः कुतः । इति एवं कामिनां प्रीतये पुनरुक्तं पुनःपुनरुच्यमानं वचो दूतीवाक्यं नवनवत्वं नवप्रकारत्वमपूर्वत्वम् । इयाय । प्रकारार्थे द्विर्भावः । कर्मधारयवद्भावात्सुपो लुक् । काम्यानुराग-प्रकटनात् कामिनः प्रहृष्यन्तीति भावः । स्वागतावृत्तमेतत् ॥ ४३ ॥

कतिपय सुराङ्गनाओं के कलह से उनके प्रेमीजन भी कुछ कुछ रूठ बैठे थे उन युवतियों ने अपनी सखियों से प्रेरणा किया कि वे उनके चरणों को प्रसन्न कर दें अतः वे (सखियाँ) उनके प्राणप्यारों से कहती हैं — 'वह ( आपकी प्रियतमा ) ( आप के आगमन की प्रतीक्षा करने के लिये ) दरवाजे पर दृष्टि लगाये रहती है । अपने हथेली पर कपोल रखकर बैठी रहती है ( अर्थात् चिन्ता में पड़ी रहती है ) उसका जीवन आप के अधीन है । फिर उनका झगड़ा ( कलह ) कहाँ' इस प्रकार का बात चीत से जो सखी के द्वारा की गई कामियों के हृदय में नये नये प्रेम के अङ्कुर उगने लगे ॥ ४३ ॥

साचि लोचनयुगं नमयन्ती रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां सङ्गतावुपरराम च लज्जा ॥ ४४ ॥

साचीति ॥ लोचनयुगं साचि तिर्यक् नमयन्ती लिये तिर्यक् पातयन्ती । न तु सम्मुखमीक्षयेत्यर्थः । दयितवक्षसि पातं रुन्धती हस्तमपि प्रतिषेधती लज्जा सुभ्रुवो नायिकाया विभूषां शोभां जनयति स्म । सम्प्रति सुरतमध्ये सति उपरराम च । एवं यतस्तदा चाभूषणमेवेति भावः । विभाषाकर्मकात् इति परस्मैपदम् ॥ ४४ ॥

जो सङ्कोच सुर रमणियों को सीधे अवलोकन करने में असमर्थ बनाता था अर्थात् कनौन्ही दृष्टि से देखने को बाध्य करता था और पति देव की तरफ अवलोकन करने के लिये भी मना करता था और उन सुलोचनाओं की शोभा की वृद्धि करता था वह पति के साथ सङ्गम काल में उन युवतियों के यहाँ से धीरे धीरे विदा हो चला ॥ ४४ ॥

सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदि कोपपदेन ।
योषितः सुहृदिव स्म रुणद्धि प्राणनाथमभिबाष्पनिपातः ॥ ४५ ॥

सव्यलीकमिति ॥ सव्यलीकं सापराधम् अत एव अवधीरितोऽवज्ञातः सन् खिन्नस्तम् । पूर्वकाल इत्यादिना तत्पुरुषः । सपदि कोपस्य पदेन व्याजेन प्रस्थितं

निर्गच्छन्तं प्राणनाथं प्रियं योषित् सवन्ती अभिबाष्पनिपातं आभिमुख्येनाश्रुमोचं सुहृदिव रुणद्धि स्म रुरोध । बाष्पपातस्य मन्युमोचकलिङ्गतया प्रस्थानप्रतिबन्धकत्वात् सुहृदौपम्यम् । इयमधीरा खण्डिता—'ज्ञातेऽन्यासङ्गविकृते पत्यौ खण्डितेर्ष्याकषायिता । अधीराश्रु विमुञ्चन्ती विज्ञेया चात्र नायिका ॥' इति दशरूपके ॥ ४८ ॥

उन में से किसी एक अप्सरा के हृदयेश ( पति ), जो कुछ अपराध कर बैठे थे उसके कारण दिये गये तिरस्कार से खिन्न होकर क्रोध की मुद्रा बनाकर शीघ्र ही चल पड़े । यह देख उस रमणी ने अधीर होकर आँसू बहाया जिसके कारण पतिदेव रुक गये । इस अश्रुपात ने उनके लिये मित्र का काम किया ॥ ४८ ॥

शङ्कितायं कृतबाष्पनिपातामीर्ष्यया विमुखितां दयिताय ।
मानिनीमभिमुखाहितचित्तां शंसति स्म घनरोमविभेदः ॥ ४९ ॥

शङ्कितायेति ॥ शङ्किताय दयितापराधविरक्ताय नायकाय । ईर्ष्यया विमुखितां विमुखीकृताम् । अत एव कृतबाष्पनिपातां मानिनीं घनरोमविभेदः सान्द्रपुलकोद्गमोऽभिमुखमाहितं चित्तं यया ताम् । विप्रकोपामित्यर्थः । शंसति स्म । व्यनक्ति स्मेत्यर्थः । अन्यथा सात्त्विकानुदयादिति भावः । अत्रापि पूर्वोक्तैव नायिका ॥ ४९ ॥

उन सुरबालाओं में से किसी एक ने ईर्ष्या से अपने पति से मुख फेर लिया और उसके नेत्रों से आँसुओं की झड़ी लगने लगी । उसके शरीर के रोमाञ्चने प्राणनाथ से जो सन्देह ग्रस्त थे, सूचना दी कि वह अब अनुरक्त है और आप में उसका चित्त भी लगा हुआ है ॥ ४९ ॥

अथ सम्भोगशृङ्गारमाह, तत्रापि बाह्यरतमाह—

लोलदृष्टि वदनं दयितायाश्चुम्बति प्रियतमे रभसेन ।
व्रीडया सह विनीवि नितम्बादंशुकं शिथिलतामुपपेदे ॥ ५० ॥

लोलेति ॥ प्रियतमे लोलदृष्टि चञ्चलेक्षणं दयिताया वदनं रभसेन बलात्कारेण चुम्बति सति विनीवि निर्गतबन्धनम् । अंशुकं नितम्बाद्व्रीडया सह शिथिलतामुपपेदे । उभयमपि शिथिलमासीदित्यर्थः । अत्र व्रीडांशुकयोः सम्बन्धभेदेऽभिन्नशिथिलतासम्बन्धरूपतयैक्याध्यवसायनिबन्धनातिशयोक्तिमूलः सहोक्तिविशेषोऽलङ्कारः । अत एव व्रीडांशुकौपम्यं च व्यज्यते । अत्र वात्स्यायनः—'बाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते । तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम् ॥ द्वितीयं सुरतं साक्षात्नानाकरणकल्पितम् ॥' इति ॥ ५० ॥

पति के द्वारा वल्लभा के जिसके नेत्र चञ्चल हो रहे थे, मुख का चुम्बन करने पर नीवी ( वस्त्रग्रन्थि ) खुल जाने से लज्जा के साथ साथ वस्त्र भी नितम्ब से खिसक पड़ा ( अर्थात् वस्त्र तो नितम्ब से छूट ही गया लज्जा ने भी अपनी राह ली ) ॥ ५० ॥

ह्रीतया गलितनीवि निरस्यन्नन्तरीयमवलम्बितकाञ्चि ।

मण्डलीकृतपृथुस्तनभारं सस्वजे दयितया हृदयेशः ॥ ४८ ॥

ह्रीतयेति ॥ गलितनीवि गलितबन्धं तथापि अवलम्बिता काञ्ची येन तत्। काञ्चीलग्नमित्यर्थः । तत् अन्तरीयमधोंशुकम् । 'अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके' इत्यमरः । निरस्यन् आक्षिपन् । हृदयेशः प्रियो ह्रीतया लज्जितया । ह्रीधातोः कर्तरि क्तः । दयितया मण्डलीकृतो वर्तुलीकृतः पृथुस्तनभारो यस्मिन्कर्मणि तद्यथा तथा । गाढमित्यर्थः । सस्वजे आश्लिष्टः । प्रियवक्षःप्रतिबन्धायेत्यर्थः ॥४८॥

पतिदेव नीवीविहीन तन के नाद (मानो) प्रियतमा के परिधान को जो काञ्ची के सहारे रुके हुये थे दूर हटाते हुये प्राणेश्वर के द्वारा वह स्तनों को दबाकर (गाढ़) आलिङ्गित किये गये ॥ ४८ ॥

आदृता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः ।

सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥ ४९ ॥

आदृता इति ॥ परिरम्भा आलिङ्गनानि नखपदैर्हेतुभिः । आदृता अभिमताः । हेतौ इति तृतीया । तथा चुम्बितानि चुम्बनानि घनदन्तनिपातैर्गाढदन्तक्षतैर्हेतुभि रादृतानीति लिङ्गविपरिणामः । सुरतसुखोद्दीपकत्वात्कान्तदन्तक्षतपूर्वकेष्वालिङ्गनचुम्बनेष्वादर संवृत्त इत्यर्थः । ननु सुकुमारे कामतन्त्रे कथं पीडाकरेष्वादर इति न वाच्यमित्याह—सौकुमार्येति । सौकुमार्यमेव गुणस्तेन संभृतकीर्तिर्लब्धयशाः कामः सुरतेषु संभोगेष्वपि । न केवलं विप्रलम्भेष्विति भावः । वामः क्रूर एव । सुकुमार काम इति प्रवादमात्रम् । वस्तुतस्तु पाकशासन सुरतभावकठोर भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४९ ॥

आलिङ्गन की प्रशंसा नखक्षतों के कारण ही होती है। चुम्बन की शोभा घने दाँतों के द्वारा किये गये क्षत से होती है। जो सुकुमारता के कारण भावनक प्रशंसनीय है वह मदन (कामदेव) सुरत समय विपरीत (क्रूर) हो जाता है। नखक्षत और दन्तक्षत ये सब क्रूरों के ही काम हैं ॥ ४९ ॥

अथाभ्यन्तर रतमाह—

पाणिपल्लवविधूननमन्तः सीत्कृतानि नयनार्धनिमेषाः ।

योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ ५० ॥

पाणीति ॥ रहसि एकान्ते इति निरर्गलत्वोक्तिः । गद्गदवाचां स्खलद्गिरां योषितां सम्बन्धीनि पाणिपल्लवयोर्विधूननं कम्पनम् । अन्तः सीत्कृतानि सीत्काराः । एतेन कुट्टमितस्यो भाव उक्तः । अधरग्रहणादौ सुखेऽपि दुःखवदुपचारः कुट्टमितम् इति लक्षणात् । नयनार्धनिमेषाः अर्धनिमीलितानि । रहस्यकान्ते गद्गद

वाचा योषितामिति विशेषणसामर्थ्याद्गद्गदकण्ठत्व चेत्येतानि मदनस्याज्ञतामुपययु । अस्त्रवत् पुंसामुद्दीपनान्यासन्नित्यर्थः । अत्र सीत्काराद्यर्धनिमेषादिना सुखपारम्यस्य व्यज्यते । तदुक्तं रतिरहस्ये—'स्खलता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाञ्छनम् । श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुला ॥' इति ॥ ५० ॥

( सुरतकाल में ) सुरयुवतियों के स्खलित वचन, करकिसलय का सञ्चालन, सीत्कार के शब्द और अर्द्धनिमीलित नेत्र—ये सब कामदेव के लिये अस्त्र बन गये ( अर्थात् इन्हीं क्रियाओं के द्वारा कामदेव धीरे २ अपना काम ( प्रहार ) करने लगा ) ॥ ५० ॥

अथ मधुपानवर्णनमारभते—

पातुमाहितरतीन्यभिलेषुस्तर्षयन्त्यपुनरुक्तरसानि ।
सस्मितानि वदनानि वधूनां सोत्पलानि च मधूनि युवानः ॥ ५१ ॥

'पातुमिति ॥ युवानः आहितरतीनि वर्धितरागाण्यत एव अपुनरुक्तरसानि पुनः पुनः पानेनाप्यपूर्वस्वादान्यत एव तर्षयन्ति तृष्णोत्पादकानि । अतृप्तिकराणीत्यर्थः । सस्मितानि वधूनां वदनानि सोत्पलानि मधूनि च पातुमभिलेषुरिच्छन्ति स्म । अत्र प्रस्तुतानामेव वदनानां मधूनां च पानक्रियौपम्यस्य गम्यत्वात्केवलं प्राकरणिकविषयतया तुल्ययोगिताऽलङ्कारः । 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति लक्षणात् ॥ ५१ ॥

सुरयुवतियों का अपने २ प्रियों के साथ मद्यपान करने का वर्णन किया है —

( युवक गन्धर्वों ने मद्य और युवतियों के मुख ) में अनुरक्त होकर युवतियों के मुखों तथा कमलयुक्त मदिराओं का पान करने के लिये इच्छा प्रकट की। युवतियों के मुख पर मन्दहास सुशोभित हो रहा था। उनसे उन लोगों की तृप्ति भी नहीं हो पाती थी और बार २ उनका स्वाद लिया था तथापि उनके लिये वे अनास्वादित से मालूम होते थे ॥५१॥

कान्तसंगमपराजितमन्यौ वारुणीरसनशान्तविवादे ।
मानिनीजन उपाहितसंधौ संदधे धनुषि नेषुमनङ्गः ॥ ५२ ॥

कान्तेति ॥ कान्तसंगमेन पराजितमन्यौ त्यक्तरोषे । तदधिकत्वात्तस्येति भावः । किंच, वारुणीरसनेन मद्यास्वादेन शान्तो विवादो वाक्कलहादिर्यस्य तस्मिन् । अत उपाहितसंधौ प्रियैः सह कृतसंधाने मानिनीजने विषयेऽनङ्गो धनुषीषुं न संदधे संधानं नाकरोत् । सिद्धसाध्ये साधनवैयर्थ्यादिति भावः ॥ ५२ ॥

प्रिय के संयोग से मानिनी जन का क्रोध ठंडा पड गया, मदिरा के आस्वादन से कलह भी मिट गया, और अब उन्होंने अपने प्रिय के साथ सन्धि भी कर ली। अतः कामदेव ने धनुष की प्रत्यञ्चा पर शर-सन्धान नहीं किया ॥ ५२ ॥

-समास । नञ्समासे नलोप स्यात् । मेव इव भापेव । उपचारविशेषाद्धोऽन्येषु रस-विशेष स्यादिति भाव । आस्वादनादिपदार्थानामनेकरसत्वाप्राप्तिहेतुत्वात् काव्यलिङ्ग तावदेक स्वादनादीनामनेकधर्माणामेकस्मिन्नेव सर्वंक्रमेण सबन्धात्पर्यायभेदश्च, तयोश्च -ससृष्टयोरनेकरसत्वोत्प्रेक्षावीजत्वात्तया सहाङ्गाङ्गिभावेन सकर ॥ ५५ ॥

मद्य ( शराब ) पहले स्वय पान किया गया फिर आदरपूर्वक प्रियतमों के द्वारा प्राप्त कराया गया । पश्चात् एक ही पात्र में उनके साथ पान किया गया । प्रतिबार (जितनी बार मद्यपान किया गया उसमें हरबार ) एक तरह के स्वाद का अनुभव न हुआ किन्तु बार बार उसका स्वाद बदलता गया ॥ ५५ ॥

भ्रूविलाससुभगाननुकर्तुं विभ्रमानिव वधूनयनानाम् ।
आददे मृदुविलोलपलाशैरुत्पलैश्चषकवीचिषु कम्प ॥ ५६ ॥

भ्रूविलासेति ॥ भ्रूविलासै सुभगान् सुन्दरान् । वधूनयनाना विभ्रमाननुकर्तुं नैरात्मान समीकर्तुमिवेति फलोत्प्रेक्षार्थत्वात् । मृदुविलोलपलाशैरीषच्चञ्चलदलै । उत्पलै । चषकेषु या वीचयो मधूर्मयस्तासु य कम्प स आददे स्वीकृत । न तु स्वकम्पस्तस्य विलोलविशेषणेनैवोक्तत्वात्तत्स्वीकारश्च तद्योग एव । एवं नेत्रमात्रसाम्य-भाजामुत्पलाना कम्पनामषीवियोगात्सुभ्रूविलासनेत्रसाम्य जातमित्यर्थ ॥ ५६ ॥

चषक में पड़े हुये कोमल और चल दल युक्त कमल मदिरा में उठनेवाली लहरियों से कम्पित हो रहे थे उस समय यह मालूम पड़ता था मानो वे सुरयुवतियों के नेत्रों के चाञ्चल्य का जो कटाक्षपात के कारण परम रम्य था, अनुकरण कर रहे थे । अर्थात् जब वे अप्सरायें मद्यपान कर रही थीं उस समय मद्यपात्रस्थ मदिरा में तरङ्गें उठ रही थीं जिससे कमल के दल विचलित हो उठे जिन्हे देखने पर प्रतीत होता था कि मानो वह अप्सराओं की आँखों की नकल करते चलते है ॥ ५६ ॥

ओष्ठपल्लवविदशरुचीना हृद्यतामुपययौ रमणानाम् ।
फुल्ललोचनविनीलसरोजैरङ्गनास्यचषकैर्मधुवार ॥ ५७ ॥

ओष्ठेति ॥ ओष्ठ एव पल्लवस्तस्य विदशो दशने रुचिरभिलाषो येषा तेषाम् । सुखसुरापानमिषेणाधर पिपासतामित्यर्थ । रमणाना फुल्लानि लोचनान्येव विनील-सरोजानि येषु तै । अङ्गनास्यानि एव चषकाणि पानपात्राणि । 'चषकोऽस्त्री पान-पात्रम्' इत्यमर । तै, मधुवारो मधुपानवृत्तिर्हृद्यता हृदयप्रियतामुपययौ । 'हृदयस्य प्रिय' इति यत्प्रत्यय । ' हृदयस्य हृल्लेखयदण्लासेषु-' इति हृद्भाव । रमणविशेष-णार्थहेतुकत्वाल्लिङ्गसंकीर्णरूपकालङ्कार ॥ ५७ ॥

किसलयानुकारी अधर के पान करने के अभिलाषी प्रेमीजन—

रमण करने वाले प्रेमीजन प्रेमिकाओं के अधर पल्लवों का रसपान करने की अभिलाषा

करके युवतियों के मुख को मद्यपात्र के समान थे उनके विकसित नेत्र भी पात्रस्थ नील कमल के सदृश थे इस प्रकार से मानो वे मद्यपान की आवृत्ति कर रहे थे वह उन्हें बहुत ही आनन्द-प्रद हुआ ॥ ५७ ॥

प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन ॥ ५८ ॥

प्राप्यत इति ॥ गुणवतापि आश्रयवशेन गुणानां विशेषः प्रकर्षः प्राप्यते व्यक्तम् । तत्तथा । उक्तं तथैवेत्यर्थः । हि यस्मात् । दयितानाम् आननेन करणेन दत्तं मधु रसातिशयेन स्वादुप्रकर्षेण कर्त्रा व्यानशे व्याप्तम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५८ ॥

'गुणों से सम्पन्न आश्रय के कारण गुणों में विशेषता आ ही जाती है यह बात स्पष्ट है क्योंकि प्रियतमा के द्वारा अर्पित मद्य ने स्वाद के आधिक्य से मद्यपान के कर्ता को अपनी तरफ खींच लिया ॥ ५८ ॥

वीक्ष्य रत्नचषकेष्वतिरिक्तां कान्तदन्तपदमण्डनलक्ष्मीम् ।
जज्ञिरे बहुमताः प्रमदानामोष्ठयावकनुदो मधुवाराः ॥ ५९ ॥

वीक्ष्येति ॥ रत्नचषकेषु स्फटिकादिमणिपात्रेषु । अतिरिक्तां पानकालगमनात्पूर्वाभ्यधिकां कान्तस्य पत्युः दन्तपदमण्डनं तस्य लक्ष्मीं शोभाम् । प्रतिबिम्बितामिति शेषः । वीक्ष्य । ओष्ठयावकनुदोऽधरलाक्षारागहारिणो मधुवाराः मधुपानाभ्यासाः प्रमदानां बहुमता अभिमताः । वर्तमाने क्तः । तद्योगात्षष्ठी । जज्ञिरे जाताः । तेषां प्रियानुरागचिह्नप्रकाशकत्वादिति भावः ॥ ५९ ॥

मद्य के बार २ पान करने से युवतियों के ओष्ठ प्रदेश की लाक्ष महावर छूट गई थी तथापि युवतियों ने रत्न के बने हुये मद्यपात्र में प्रियतम के द्वारा किये गये दन्त क्षत रूप आभूषण की शोभा को स्पष्ट प्रतिबिम्बित देखकर पुनः पुनः मद्यपान को अपना समझा ॥ ५९ ॥

मधुपानाद्विलोचनेषु रागोत्पत्तिः अधरेष्वपि लाक्षारागनिवृत्तिः, मद्यस्याननयो-गादन्यगन्धसङ्क्रान्तिरिति स्थिते सत्युत्प्रेक्षते—

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा ।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

लोचनेति ॥ लोचने चाधरश्च लोचनाधरम् । सप्तम्याभावः इति 'व्यभिचार ज्ञापकाल्लाक्षाधरपदस्य पूर्वनिपातः । कृताहृतावित्यत्रापि विशेषणसमासः । लोचनाधरस्य कृताहृतो रागो यया सा तथोक्ता । लोचनयोः कृतरागाधरादाहृतरागा कृतरागा चेत्यर्थः । यद्वाप्यार्थसम्बन्धात्सामान्यस्य योगविशेषे पर्यवसानमियमेना

धिकरणापादानार्थयोराक्षेपात्। तथा चाधरलोचनगुणयो रागतद्विरहयो स्थानपरिवृत्तिं कृतवतीत्यर्थः। तथा वासितेन स्वक  न्तिसुरभितेन आननेन विशेषितोऽतिशयितो गन्धो यस्याः सा। यद्वा,-वासितानना वासावर्यादानेनैव विशेषितगन्धा चेति कृत-बहुव्रीहिर्विशेषणसमास । उभयत्राप्याननसक्तवासस्वगन्धा स्वसकान्ताननगन्धा चेत्यर्थः। एवभूता वारुणी मदिरा परगुणात्मगुणाना परयोर्लोचनाधरयोर्गुणो च परस्यानलस्य गुण आत्मनो वारुण्या गुणश्च परगुणात्मगुणास्तेषा परगुणात्मगुणाना व्यत्यय विनिमय तु चितेने विस्तारयामास। चित्तन भ्रामादिकी वस्तुपरिवृत्तिर्व्यत्यय । बुद्धिपूर्वा तु विनिमय । अत्र तन्त्रोच्चरितस्य 'परगुण' शब्दस्यावृत्त्या परगुणौ च परगुणात्मगुणौ चेति विग्रह कथञ्चिद्गत्या बोद्धव्य । उपमानपूर्वपदबहुव्रीहिवत् । तथा चायमर्थ —परगुणयोरधरलोचनगुणयो रागतद्विरहयोर्व्यत्यय तु विनिमय तु वितेने, तथा परगुणात्मगुणयोराननगन्धात्मगन्धयोर्व्यत्यय तु वितेने । अन्यथा कथमन्यस्मिन्नन्यधर्मोपलम्भ सम्भवतीति भाव । अत्र लोचनाधररागयोस्तद्भाव-योश्च भेदेऽप्यभेदाध्यवसायादेकस्यैवाप्युक्ति । तस्मात्सम्मूलातिशयोक्त्यनुप्राणिता चेय व्यत्ययविनिमययोरन्यतरकरणादुत्प्रेक्षेति सक्षेप । सा च प्रतीयमाना व्यञ्जका-प्रयोगात्। 'तुर्वाप्यस्तु सन्नाये ॥ ६० ॥

'मदिरा ने ( सुन्दरियों के ) नेत्रों को रञ्जित कर दिया था और उनके अधरों की रक्तिमा [ जो महावर लगाने से थी ] को अपहरण कर ही लिया था।' उसने उनके मुख को अपनी गन्ध से सुवासित कर दिया था तथा वह उसके मुखसुरभि से स्वय सुरभित हो गई थी वह उसने अपने गुणों से दूसरे के गुणों का विनिमय [ अदल बदल] किया था अथवा भ्रम में उलट फेर ही कर दिया था ॥ ६० ॥

तुल्यरूपमसितोत्पलमक्ष्णो कर्णग निरुपकारि विदित्वा ।
योषित सुहृदिव प्रविभेजे लम्भितेक्षणरुचिर्मदराग ॥ ६१ ॥

तुल्येति ॥ अक्ष्णोस्तुल्यरूपमभितुल्याकृति योषित कर्णग कर्णावतंसीकृतम् । असितोत्पल निरुपकारि अनुपकारक विदित्वा ज्ञात्वा । तत्कार्यशोभाया कर्णान्त-विश्रान्तेनाक्ष्णैव कृतत्वादिति भाव । मदराग सुहृदिव उत्पलस्य बन्धुरिव । अनिष्ट-वारकत्वादिति भाव । लम्भितेक्षणरुचिराहितनयनकान्ति सन् । प्रविभेजे वर्णान्तरा-पादनेन प्रविभक्तवान् । अतैलवर्णकरणादक्ष्णो व्यावर्तयामास । ततो विच्छित्तिकरत्वा-दिति भाव ॥ ६१ ॥

एक अप्सरा ने अपने कान पर नीलकमल को धारण कर रक्खा था वह बिल्कुल नेत्र के रग से मिलता जुलता था उसी के विषय में कवि वर्णन कर रहा है —

मदराग ने कर्णोत्पल को आँखों के समान नीले रग का देखकर और उसे व्यर्थ समझ कर नेत्र के रगो को अरुणिमा में परिणत कर मित्र के समान कमल की सेवा की तात्पर्य

बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये ।
वश्यता मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः ॥ ६४ ॥

बद्धेति ॥ बद्धा कोपेन विकृतिर्याभिस्तास्तथाभूता अपि रामा कर्म चारुता तासां सौन्दर्यं कर्त्री अभिमतता प्रियत्वाख्यम् । उपनिन्ये । सौन्दर्यं हि विकृतिमपि रोचयत इति भावः । मधुमदो दयितानां वश्यता विधेयत्वमुपनिन्ये । तथाहि-सर्व आत्मवर्गहितमिच्छति । अतश्चारुता स्त्रीत्वात् स्त्रीणामुपचकार । मधुमदस्तु पुंस्त्वात् पुंसामिति युक्तमित्यर्थः । अत्र विकृता अप्यभिमता कुपिता अपि वश्या इति विरोधस्य चारुतामदाभ्यां समाधानादुभयत्रापि विरोधाभासो भवन्नर्थान्तरन्यासेन सङ्कीर्यते ॥ ६४ ॥

क्रोध करने के कारण [ नाक भौंह सिकोड़ने से ] युवतियों में कुछ विकार आ गया था परन्तु सुन्दरता ने उसे अभीष्ट बना दिया । मधुमदने उन सुन्दरियों को अपने २ पति के वश में कर दिया । क्योंकि सभी लोग अपने अपने पक्ष का कल्याण चाहते हैं तात्पर्य यह है कि 'सुन्दरता' शब्द स्त्रीलिङ्ग है और 'मदराग' शब्द पुलिङ्ग है, सुन्दरता ने स्त्रियों के सौन्दर्य को क्रोधादिकके कारण विकृत न होने दिया । यहाँ स्त्री ने स्त्री का उपकार किया । मदराग को देख स्त्रियाँ पतियों पर मुग्ध हो गई । यहाँ पुरुष (मदराग) ने पुरुष जाति का उपकार किया ॥ ६४ ॥

वाससा शिथिलतामुपनाभि ह्रीनिरासमपदे कुपितानि ।
योषितां विदधती गुणपक्षे निर्ममार्ज मदिरा वचनीयम् ॥ ६५ ॥

वाससामिति ॥ उपनाभि नाभिसमीपे वाससां शिथिलतां ह्रीनिरासं लज्जात्यागम् । अपदे कुपितानि अस्थानकोपांश्च गुणपक्षे गुणकोटौ विदधती निवेशयन्ती । दोषानप्येतान्गुणान्कुर्वतीत्यर्थः । मदिराऽपि योषितां वचनीयम् 'न नाभिं दर्शयेत्' इति शास्त्रनिषिद्धाचरणनिन्दां निर्ममार्ज । तथा दोषाणामपि मदशैथिल्याद्दोषत्वे सत्यानीं गुणत्वान्न कश्चिद्वचनीयावकाश इत्यर्थः ॥ ६५ ॥

मदिरा ने सुन्दरियों के नाभिप्रदेश के परिधान को शिथिल कर दिया, [ जिससे आवृत नाभि खुल गयी ] लज्जा को दूर भगाया, और बिना कारण उन्हें [ सुन्दरियों को ] कुपित किया । इस तरह उन्हें गुण की श्रेणी में रखकर [ नाभि दिखलाना, निर्लज्ज बनना, तथा अकारण क्रोध करना ]—इत्यादि अपवादों को उनके पास फटकने नहीं दिया ( उन्हें मिटा ही दिया ) भाव यह है कि शास्त्र में लिखा है "स्त्रियों को नाभि नहीं दिखलानी चाहिये, निर्लज्ज भी नहीं होनी चाहिये तथा किसी पर अकारण क्रोध भी नहीं करना चाहिये ।" मदिरा पान करने से ये तीनों दोष उनमें आ गये । उन्होंने सब कुछ कर डाला इसलिये वे निन्दा के पात्र थीं तो भी मदिरा पान करनेवालों के लिये ये

सब दीवावद नहीं होते यही कारण है कि वे उत्सव सभी में ही रह गई। कोई किसी प्रकार को निन्दा न कर सका ॥ ६५ ॥

मद्‌ यूपसखि निक्षिपतीनामात्मनो मधुमदोद्यमितानाम्‌ ।
व्रीडया विफलया वनितानां न स्थितं न विगतं हृदयेषु ॥ ६६ ॥

मद्‌ मिति ॥ उपसखि सखीसमीपे। समीपार्थेऽव्ययीभावः। आत्मन। स्वदेहान्‌। आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि इति वैजयन्ती। मद्‌ यु निक्षिपतीनां निपातयन्तीनाम्‌। मद्‌ यातुपरि पतन्तीनामित्यर्थः। आत्मनीनयोनुम्‌ इति विकल्पादनुमभावः। कुतः। मधुमदेनोद्यमितानां प्रेरितानाम्‌। न तु स्वेच्छयेति भावः। वनितानामनुरक्तस्त्रीणाम्‌। वनिता जनितात्यर्थानुरागायां च योषिति इति विश्वः। हृदयेषु विफलया। अनुचितत्वरया इति भावः। व्रीडया न स्थितं न विगतम्‌। वैफल्यात्तस्या मदोपाधिकत्वाच्चेति भावः। अत एव नोभयमित्यविरोधः ॥ ६६ ॥

उन अनुरागवती अप्सराओं ने जो मदिरा के नशे से प्रेरित [redacted] रही थी सखियों के समीप अपनेको प्रियतमोंके ऊपर गिरा दिया। इस तरह उनका लज्जा करना व्यर्थ हो गया। इससे वह स्पष्ट न हो पाया कि लज्जा उनके हृदय में वर्तमान है अथवा चली गई ॥ ६६ ॥

रुन्धती नयनवाक्यविकासं सादितोभयकरा परिरम्भे ।
व्रीडितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे ॥ ६७ ॥

रुन्धतीति ॥ नयनानां वाक्यानां च विकासं प्रागल्भ्यं रुन्धती प्रतिबध्नती। तथा परिरम्भ आलिङ्गने सादितौ उभौ करौ यया सा युवतीनां सम्बन्धिनी क्षीबता मत्तता। कर्तरि क्तः। अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः इति निपातनात्साधुः। क्षीबो मत्त तस्य भावः क्षीबता। ललतोर्गुणवचनस्य पुंवद्भावो वक्तव्यः। बहुगुणैः स्खलद्वचनोक्त्यादिभिर्व्रीडितस्य लज्जायाः। भावे क्तः। ललितं विलासम्‌। अनुजह्रेऽनुचक्रे। कर्तरि लिट्‌। व्रीडाकार्यकरत्वात्क्षीबताऽनुकरणमित्युपमालङ्कारः ॥६७॥

रुन्धती (मत्तापन) ने नेत्र और वाक्यों के विस्तार को रोक दिया (अर्थात्‌ आँखें झिपने लगीं और मुख से बात बन्द हो गई) आलिङ्गन के लिये हाथों को अशक्त बना दिया इस प्रकार के अनेकों गुणों से युवतियों की लज्जा के द्वारा किये गये हाव भावादिकों का अनुकरण किया अर्थात्‌ लज्जा के कारण जहाँ सामने की तरफ देख नहीं सकतीं मुखसे बात नहीं निकल पाती और हाथ स्तम्भित हो जाते हैं वहां दशा मदिरा पान के पश्चात्‌ मत्तापन में भी [redacted] इससे कहा गया है कि मत्तापनने लज्जा से ही यह सब कुछ सीखा है ॥ ६७ ॥

योषिदुद्धतमनोभवरागा मानवत्यपि ययौ दयिताङ्कम्‌ ।
कारयत्यनिभृता गुणदोषे वारुणी खलु रहस्यविभेदम्‌ ॥ ६८ ॥

योषिदिति ॥ उद्धत उत्कटो मनोभवेन यो राग प्रीति यस्या सा योषि मानवत्यपि दयितस्याङ्क ययौ। यतो मानाद्रागो बलीयानिति भाव । लाघवदोष परिहरति – कारयतीति । अनिभृता चपला । न कार्यकारिणीत्यर्थ । वारुणी मदिरा गुणेषु दोषेषु च विषये । सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति । रहस्यविभेद रहस्यभङ्गं कारयति खलु । बलान्निगूहितावपि गुणदोषौ प्रकाशयतीत्यर्थ । यतोऽतिगूढरागप्रकटन प्रकटमानत्यागश्च प्रमत्ताया न लाघवमावहति । अबुद्धिपूर्वकत्वादिति भाव ॥६८॥

जो सुराङ्गना मान कर बैठी थी वह भी कामदेव के कारण अनुराग दिखला कर अपने प्राणाधिप के अङ्क में स्वयं उपस्थित हो गई ( मान से राग प्रबल होता है ) चञ्चला मदिरा गुण और दोषों के विषय में निश्चय रहस्योद्घाटन कर देती है ( भेद खोल देती है ) मतलब यह है कि मदिरा में यह बड़ी विलक्षण बात है कि वह किसी की गुप्त देखी नहीं करती जो उसके पास गया बस उसके गुण और दोष को वह खोल करके ही छोड़ती है ॥ ६८ ॥

आहिते तु मधुना मधुरत्वे चेष्टितस्य गमिते तु विकासम् ।
आबभौ नव इवोद्धतराग कामिनीष्ववसर कुसुमेषो ॥ ६९ ॥

आहित इति ॥ मधुना मद्येन चेष्टितस्य रतिव्यापारस्य मधुरत्वे माधुर्ये आहिते तु सम्पादिते तु प्रागसत्त्वेन मनोहरत्वे समस्तुत्पादिते वा । विकास गमिते तु प्रागसत्त्वेव माधुर्ये प्रकर्ष प्रापिते वा । उद्धतराग उद्रिक्तराग । अत एव कुसुमेषो कामिनीषु अवसर प्रवेशो नव इवाबभौ । नित्यसन्निहितोऽपि स्वय कामिनीषु मदकृतताल्कालिकचेष्टामाधुर्याद्यागोचये सत्यपूर्ववदुद्दीप्तोऽभूदित्यर्थ । सत्यपात्तुमापितेयमुत्प्रेक्षा ॥६९॥

वारुणी के द्वारा सम्भोगव्यापार में आनन्द के सम्पादित करने पर अथवा उस आनन्द में और उत्कर्ष वृद्धि लाने पर रमणियों के विषय में पुष्पबाण [ कामदेव ] का उद्रिक्त राग के साथ प्रवेश नवीनता धारण करता हुआ उद्दीप्त हो उठा । तात्पर्य [ कामदेव ] को पहले इतना आनन्द नहीं प्राप्त हुआ था जितना मद्यपान के अनन्तर प्राप्त हुआ ] वल्लीकर्मों

मा गमन्मदविमूढधियो न प्रोज्झ्य रन्तुमिति शङ्कितनाथ कि उनको यह मानों सङ्कुचित
योषितो न मदिरा भृशमीषु प्रेम पश्यति मयमन्यपदेऽपि छल पता चला तो

मा गमन्निति ॥ शङ्कितनाथा अविश्वस्तपुरुषा योषितो मदेन वि
मूढधियो नोऽस्मान् प्रोज्झ्य विसृज्य । अपूर्णादङ्कावे समासेऽनञ्पूर्वे य तानाम् ।
मा गमन् न गच्छन्तु इति । मनीषयेति शेष । गमेर्माङि लुङ् । 'न गनि ॥७५॥
डागमप्रतिषेध । मदिरा भृशमतिमात्र नेषुर्नैच्छन्ति स्म । किंतु भर्तृविषय सम स येषा
पयुरित्यर्थं । तथा हि—प्रेम स्नेह । अपदऽस्थानेऽपि भयानि अभिष्टानि त्वाना यूनां
घते । शङ्कत इति यावत् । शङ्काहेतौ प्रेम्णि कर्तृत्वोपचार ॥ ७० ॥

अपने अपने वल्लभों [ प्रियतमों ] के विषय में सशङ्कित सुरवधुओं ने यह रताभि
त्यय ।

गतवति नखलेखालक्ष्यतामङ्गरागे समदद्यितपीताताम्रबिम्बाधराणाम् ।
विरहविधुरमिष्टासत्सखीवाङ्गनानां हृदयमवललम्बे रात्रिसम्भोगलक्ष्मी ॥७८॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये नवम सर्ग ।

गतवतीति ॥ अङ्गरागेऽङ्गविलेपने नखलेखासु नखपदेषु लक्ष्यता दृश्यतां गतवति सति । विमर्दाच्चिन्मात्रावशेषे सतीत्यर्थ । किंच, बिम्बतुल्या अधरा बिम्बाधरा । 'शाकपार्थिवादित्वान्मध्यमपदलोपी समानाधिकरणसमास' इति वामन । समदैर्दयितै पीता पीडिता अत एवातिपीडनात् आताम्रा आसमन्तात्ताम्रा बिम्बाधरा यासां तासामङ्गनानां सम्बन्धि विरहेणाश्लिष्टेन वियोगेन विधुर विह्वल हृदयम् । रात्रिसम्भोगलक्ष्मी । नखपदादिशोभेत्यर्थं । इष्टासत्सखीव निपुणसहचरीवावलम्बे धारयामास । प्रियसम्भोगचिह्नशोभा स्पष्टा बभूवेत्यर्थ । प्रियोपभोगचिह्नशोभावलोकनकाले कथं विरहमसहन्तेत्यर्थं । लुप्तपूर्णोपमालङ्कार । मालिनीवृत्तम् । लक्षणं तूक्तम् ॥ ७८ ॥

इति किरातार्जुनीयकाव्यव्याख्याया घण्टापथसमाख्यायां नवम सर्ग समाप्त ।

उन देववनिताओं के अङ्गराग (उबटन, विलेपन) केवल नखक्षतों पर दिखलाई पड़ रहे थे। उनके अधर, जो बिम्बा [पका हुआ कुन्दुरू] फल के समान थे, मत्त प्रेमियों के द्वारा निपीडन किये गये थे अतएव [तांबे के समान] ताम्राभ [लोहित] वर्ण धारण कर लिये थे। प्रिय समागम जनित नखपद की शोभा से उन बालाओं के हृदय पर प्रिय सहचरी के सदृश स्थान बनाया अर्थात् रात्रि-संभोग का दृश्य स्पष्ट प्रतीत होने लगी ॥७८॥

नवम सर्ग समाप्त।

## दशमः सर्गः

अथागन्तुकसहजशोभासम्पन्नतया समग्रसाधना स्त्रियो मुनिमन्य प्रलोभनार्थं प्रतस्थिरित्याह—

अथ परिमलजामवाप्य लक्ष्मीमवयवदीपितमण्डनश्रियस्ता ।
वसतिमभिविहाय रम्यहावा सुरपतिसूनुविलोभनाय जग्मु ॥ १ ॥

अथेति ॥ अथ प्रभाते परिमलजां सम्भोगसम्भूतां लक्ष्मीं शोभाम्। अवाप्य। 'सम्भोग' स्यात्परिमले' इति वैजयन्ती। सम्भोगात्स्त्रिय शोभन्त इति भाव । एतेना-

गतवति नखलेखालक्ष्यतामङ्गरागे समददयितपीताताम्रबिम्बाधराणाम् ।
विरहविधुरमिष्टासत्सखीवाङ्गनानां हृदयमवललम्बे रात्रिसम्भोगलक्ष्मी ।।७८।।

इति भारविकृतौ महाकाव्ये किरातार्जुनीये नवमः सर्गः ।



गतवतीति ॥ अङ्गरागेऽङ्गविलेपने नखलेखासु नखपदेषु लक्ष्यतां दृश्यतां गतवति सति । विमर्दात्तन्मात्रावशेषे सतीत्यर्थः । किञ्च, बिम्बतुल्या अधरा बिम्बाधराः । 'शाकपार्थिवादित्वान्मध्यमपदलोपी समानाधिकरणसमासः' इति वामनः । समदैर्दयितैः पीताः पीडिता अत एवातिपीडनात् आताम्रा आसमन्तात्ताम्रा बिम्बाधरा यासां तासामङ्गनानां सम्बन्धि विरहेणाश्लेषेण वियोगेन विधुरं विक्लवं हृदयम् । रात्रिसम्भोगलक्ष्मी । नखपदादिशोभेत्यर्थः । इष्टाः सत्सखीव निपुणसहचरीवावलम्बे धारयामास । प्रियसम्भोगचिह्नशोभा स्पष्टा बभूवेत्यर्थः । प्रियोपभोगचिह्नशोभावलोकनकालसाः कथं विरहमसहन्तेत्यर्थः । श्रौतपूर्णोपमालङ्कारः । मालिनीवृत्तम् । लक्षणं तूक्तम् ॥ ७८ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां नवमः सर्गः समाप्तः ।



उन देववनिताओं के अङ्गराग ( उबटन, विलेपन ) केवल नखक्षतों पर दिखलाई पड़ रहे थे। उनके अधर, जो बिम्बा [ पका हुआ कुन्दुरू ] फल के समान थे, मद प्रेमियों के द्वारा निपीडन किये गये थे अतएव [ तांबे के समान ] ताम्राभ [ लोहित ] वर्ण धारण कर लिये थे। प्रिय समागम जनित नखपद की शोभा ने उन बालाओं के हृदय पर प्रिय सहचरी के सदृश स्थान बनाया अथवा रात्रि-सम्भोग का दशा स्पष्ट प्रतीत होने लगी ॥७८॥

नवम सर्ग समाप्त ।



## दशमः सर्गः

अथ गन्धर्वाप्सरःशोभासम्पन्नतया समप्रसाधना स्त्रियो मुनिमनःक्षोभनार्थं प्रययुरित्याह—

अथ परिमलजामवाप्य लक्ष्मीमवयवदीपितमण्डनश्रियस्ताः ।
वसतिमभिविहाय रम्यहावाः सुरपतिसूनुविलोभनाय जग्मुः ॥ १ ॥

अथेति ॥ अथ प्रभाते परिमलजां सम्भोगसम्भूतां लक्ष्मीं शोभाम् । अवाप्य । 'सम्भोगः स्यात्परिमले' इति वैजयन्ती । सम्भोगाद्धि शोभन्त इति भावः । पूर्वेद्यु-

अप्सराओं के पैर के लक्तकों से, जिसमें लगाया हुआ महावर अभी गीला था, पृथ्वीपर पदचिह्न पड़कर नीले रङ्ग के घास के तृण से आच्छन्न वह भूमि लाक्षारस से रंग कर निरन्तर वीरबहूटियों ( कीट विशेष ) से व्याप्त होकर सुशोभित होने लगी ॥ ३ ॥

ध्वनिरगविवरेषु नूपुराणां पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरवविततो वनानि चक्रे मुखरसमुत्सुकहंससारसानि ॥ ४ ॥

ध्वनिरिति ॥ अगविवरेषु नगरन्ध्रेषु । गुहास्वित्यर्थः । प्रतिरवैः प्रतिध्वनिभिर्विततः सम्मूर्छितः पृथुभी रशनागुणानां शिञ्जितैः स्वनितैरनुयातोऽनुगतः । शिञ्जित इति यावत् । 'स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्' इत्यमरः । नूपुराणां ध्वनिः वनानि मुखराः शब्दायमानाः समुत्सुका उत्कण्ठाश्च हंसाः सारसाश्च येषां तानि चक्रे । अत्र हंसादिषु मुखरसमुत्सुकीकरणरूपेण वस्तुना तेषां नूपुरादिध्वनौ स्वा- त्मीयकलरवसाम्यात्स्वजातीयकूजितभ्रान्तिप्रतीतेर्भ्रान्तिमदलङ्कारो व्यज्यते ॥ ४ ॥

उनके [ सुरनारियों के ] नूपुरों [ पायजेबों ] की ध्वनि, जो करधनी की मोटी मोटी लड़ों के शिञ्जन से मिश्रित होकर अनुसृत हो रही थी, पहाड़ की कन्दराओं से प्रतिध्वनित होकर सम्पूर्ण वनस्थलियों को मुखरित कर दी जिसे सुनकर वहाँ के निवासी हंस और सारस भ्रम में पड़कर उत्कण्ठित हो उठे उन्हें यह प्रतीत हुआ कि हमारी जाति के और पक्षी बोल रहे हैं ॥ ४ ॥

अवचयपरिभोगवन्ति हिंस्रैः सहचरितान्यमृगाणि काननानि ।
अभिदधुरभितो मुनिं वधूभ्यः समुदितसाध्वसविक्लवं च चेतः ॥५॥

अवचयेति ॥ अवचयः पुष्पफलाद्यवच्छेदनं परिभोग उपभोगस्तद्वन्ति । हिंस्रा घातुका व्याघ्रादयः । 'शरारुर्घातुको हिंस्रः' इत्यमरः । तैः सहचरिताः सहचरन्ति स्म कर्तरि क्तः । 'मतिबुद्धि-' इत्यादिसूत्रेण चकारात् भूतार्थत्वाद्विपातवर्तमानार्थता । अन्ये हिंस्रेतरे मृगा हरिणादयो येषु तानि सहचरितान्यमृगाणि काननानि । तथा समुदितेन साध्वसेन विक्लवं विवशं चेतश्च वधूभ्यः । 'क्रियाग्रहणमपि कर्तव्यम्' इति सम्प्रदानत्वाच्चतुर्थी । अभितो मुनिं निकटे । आसन्नं सूचयामासुरित्यर्थः । अवचया- दिलिङ्गचतुष्टयेनासन्नो मुनिरित्यन्वमीयतेत्यर्थः ॥ ५ ॥

उन वनों में पशु-पक्षी अपने घातक जन्तुओं के साथ स्वच्छन्द विहरण करते थे, तथा आहारार्थ अवचित फल-मूलादि सामग्री ज्यों की त्यों पड़ी हुई थी और उन सुन्दरियों का चित्त महामुनि अर्जुन से आगत भय की आशङ्का से विकल हो रहा था । इन दोनों ने [ वन और चित्त ने ] अर्जुन के निकट होने की सूचना [ इन उन लक्षणों के द्वारा ] दी ॥५॥

नृपतिमुनिपरिग्रहेण सा भूः सुरसचिवाप्सरसां जहार तेजः ।
उपहितपरमप्रभावधाम्नां न हि जयिनां तपसामलङ्घ्यमस्ति ॥ ६ ॥

चिरनियमकृशोऽपि शैलसारः शमनिरतोऽपि दुरासदः प्रकृत्या ।
ससचिव इव निर्जनेऽपि तिष्ठन्मुनिरपि तुल्यरुचिस्त्रिलोकभर्तुः ॥१४॥

चिरनियमेति ॥ पुनश्च, चिरनियमेन दीर्घकालतपसा कृशः क्षीणाङ्गोऽपि शैलसारः । उपमानपूर्वपदो बहुव्रीहिः । शमे निरतोऽपि प्रकृत्या स्वभावेन दुरासदो दुर्धर्षो निर्जने विजने देशे तिष्ठन्नपि ससचिवः सपरिवार इव । किंच, मुनिरपि । ऐश्वर्यरहितोऽपीत्यर्थः । त्रयाणां लोकानां भर्तुरिन्द्रस्य । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । तुल्यरुचिः समानतेजाः । 'अपि'शब्दः सर्वत्र विरोधद्योतनार्थः । स च मुनेरतथ्यमहिमत्वेन निरस्य इति विरोधालङ्कारः,—'विरोधाभासत्वं विरोधः' इति सूत्रात् ॥ १४ ॥

दीर्घकाल से व्रती रहने के कारण दुर्बल हो गये थे तथापि पर्वत के सदृश बलवान थे। यद्यपि शान्ति के पुजारी थे तथापि स्वभावतः उनका तेज असह्य था। निर्जन प्रदेशमें रहते थे तथापि मालूम पड़ता था—अपने मित्रादिकों के साथ वर्तमान मुनिवेषधारी थे तथापि त्रिभुवनाधिपति (इन्द्र) के सदृश तेजस्वी थे ॥ १४ ॥

तनुमवजितलोकसारधाम्नीं त्रिभुवनगुप्तिसहां विलोकयन्त्यः ।
अवययुरमरस्त्रियोऽस्य यत्नं विजयफले विफलं तपोधिकारे ॥ १५ ॥

तनुमिति ॥ अवजिते तिरस्कृते लोकानां सारधाम्नी सत्वतेजसी यया ताम् । 'अन्नपद्या–' इत्यादिना ङीप् । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'तद्धितार्थ–' इत्यादिना समाहारार्थे तत्पुरुषः । पात्रादित्वात्स्त्रीत्वप्रतिषेधः । तस्य गुप्ती रक्षणे सहां समर्थाम् । पचाद्यच् । तनुं मूर्तिं विलोकयन्त्योऽमरस्त्रियोऽप्सरसो विजयफले विजयार्थे तपोऽधिकारे तपोनुष्ठानेऽस्यार्जुनस्य यत्नं विफलमवययुर्मेनिरे । त्रैलोक्याधिपत्यादिमहाफलसाधनसमर्थस्य शुष्कफलाभिलाषया मत्समातङ्गमांसभोगोचितस्य कण्ठीरवस्य जीर्णतृणचर्वणोत्कण्ठेव न शोभामावहतीति भावः । अत्र विशिष्टतनुविलोकनस्य स्त्रीविशेषणवैफल्यज्ञानहेतुत्वोक्त्या पदार्थहेतुकः काव्यलिङ्गमलङ्कारः ॥ १५ ॥

अमरललनायें तीनों लोक की रक्षा करने में समर्थ अर्जुन के शरीर को, जो संसार के पराक्रम और तेज को तिरस्कृत कर रहा था, देखती हुई उस अर्जुन के विजयार्थ तपोनुष्ठान विषयक यत्न को व्यर्थ समझीं तात्पर्य यह है कि उनके शरीर की आकृति के देखते ही सुरसुन्दरियों ने सोचा कि यह तो यों ही जो चाहे कर सकता है तपस्या तो इसके लिये तुच्छ साधन है ॥ १५ ॥

मुनिदनुतनयान् विलोभ्य सद्यः प्रतनुबलान्यधितिष्ठतस्तपांसि ।
अलघुनि बहु मेनिरे च ताः स्वं कुलिशभृता विहितं पदे नियोगम् ॥१६॥

मुनीति ॥ प्रतनुबलानि अनुत्कृष्टसाराणि तपांस्यधितिष्ठतोऽनुतिष्ठतो मुनीन्

प्रभुतनयान् दानवांश्च समस्तत्वमेव विलोभ्याकृष्य चिरात् कुलिशभृता शक्रेण। अच्युतमि महति पदे स्थाने विहित दत्त स्व स्वकीय नियोगमधिकारं ता स्त्रियो बहु यथा तथा मेनिरे। निकृष्टपदप्रवृत्तीनामुत्कृष्टपदलाभो महान्। बहुमानमूलमिति भावः। विलोभ्य मेनिरे इत्यन्वयः। यद्वा —विलोभ्य क्षोभं कारयित्वा विहित शक्रेणेत्यन्वयात् समासकृत्यनिर्वाह ॥ १६ ॥

उत्कृष्टमारहीन तपश्चर्या सम्पादन करते हुये मुनि और दानवों को शीघ्र ही मोहित करके उन सुरबालाओं ने सुरराज ( इन्द्र ) के द्वारा की गई उत्कृष्ट स्थान की अपनी नियुक्ति को बहुत समझा अर्थात् उनलोगों ने सोचा कि अबतक साधारण मुनि और राक्षसों का हमने लुभाया है अगर कहीं हम तपस्वी पर इनलोगों की चल गई तो इन्द्र हम लोगों का उचित सत्कार करेंगे ॥ १६ ॥

अथ कृतकविलोभनं विधित्सौ युवतिजने हरिसूनुदर्शनेन ।
प्रसभमवततार चित्तजन्मा हरति मनो मधुरा हि यौवनश्रीः ॥ १७ ॥

अथेति ॥ अथ अनन्तरं कृतकविलोभनं कृत्रिम विलोभनं विधित्सौ विधातुमिच्छौ। विधाञ्धातोः सन्नन्तादुप्रत्ययः। युवतिजने हरिसूनोरर्जुनस्य दर्शनेन चित्तजन्मा कामः प्रसभं बलात्। अवततार। देवतत्परः स्वाधिकुर्माणतस्य लोहो मनसि यत स्वयं मुनिमनसमनुरक्त स्त्रियस्तेन वञ्चिता इत्यर्थः। युक्त चैतत्। हि यस्मात् मधुरा मनोहरा यौवनश्रीमनो हरति। बलादिति शेषः ॥ १७ ॥

( इसके अनन्तर ) अप्सराएँ कृत्रिम मोहन करने की अभिलाषा से भरी ( कर रही ) था। ज्योंही वे अर्जुन को देखा त्योंही उनके मनमें मनोभव ( काम ) का अवतार हो गया ( अर्थात् अर्जुन के देखते ही वे उनपर मुग्ध हो गई ) क्योंकि युवावस्था की रम्य शोभा मन को अपहरण कर लेती है ॥ १७ ॥

सपदि हरिसखैर्वधूनिदेशाद्ध्वनितमनोरमवल्लकीमृदङ्गैः ।
युगपदृतुगणस्य सन्निधानं वियति वने च यथायथं वितेने ॥ १८ ॥

सपदीति ॥ सपदि वधूनां निदेशान्नियोगात् ध्वनिता वादिता मनोरमा वल्लक्यो वीणा मृदङ्गाश्च यैस्तैर्हरिसखैर्गन्धर्वैर्वियति आकाशे वने च युगपदृतुगणस्य षडृतुपञ्चकस्य। सन्निधानमाविर्भावो यथायथं यथास्वम्। असंकरेणेत्यर्थः। 'यथास्व तु यथायथम्' इति निपातः। वितेने वितस्तारे। उद्दीपनसामग्री सम्पादितेत्यर्थः ॥ १८ ॥

शीघ्र ही सुरयुवतियों के आदेशानुसार—गन्धर्वों ने मनोरम वीणा और मृदङ्ग बजाया पुनः एक ही काल में छहों ऋतुओं को अपने अपने व्योम तथा वनों में आविष्कृत करके विस्तृत कर दिया ॥ १८ ॥

अथ वर्षाक्रमेण ऋतून्वर्णयति—सजलेत्यादि—

सजलजलधरं नभो विरेजे विवृतिमियाय रुचिस्तडिल्लतानाम् ।
व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥१९॥

सजलेति ॥ सजला जलधरा यस्मिंस्तत् । नभो विरेजे । तडितो लता इव तासां रुचिः प्रभा विवृतिं विजृम्भणम् । इयाय । तथा व्यवहितरतिविग्रहैर्दूरीकृतरतिप्रकुपितप्रणयकलहैर्जलगुरुभिः । जलभारादुम्भीरैरित्यर्थः । स्तनितैर्गर्जितैः । दिगन्तरेषु वितेने विततैरभावि भावे लिट् । अकर्मकत्वं वैवक्षिकम् । अत एव दिगन्तरेष्वित्यधिकरणत्वेन प्रयोगः । अन्यथा कर्मत्वमेव स्यात् ॥ १९ ॥

नील नीरद [illegible] आकाश आच्छन्न हो सुशोभित होने लगा । विद्युल्लता की चमक स्पष्ट दिखलाई पड़ने लगी । तथा जलभार से गम्भीर मेघगर्जन, जिससे रतिकालिक प्रणयिजनों का कलह दूर हो गया था, दिगन्तों में गूँज उठा ॥ १९ ॥

परिसुरपतिसूनुधाम सद्यः समुपदधन्मुकुलानि मालतीनाम् ।
विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातः ॥ २० ॥

परीति ॥ परिसुरपतिसूनुधाम अर्जुनाश्रमं प्रति । परीति लक्षणार्थे कर्मप्रवचनीयस्य योगाद्द्वितीया । यद्वा,—वर्जनार्थस्य तस्यात्र विराधाद्विभक्त्यर्थेऽव्ययीभावः । तथा च सुरपतिसूनुधाम्नीत्यर्थः । सद्यो मालतीनां जातीलतानाम् । 'सुमना मालती जातिः' इत्यमरः । मुकुलानि समुपदधत् जनयत् । विरलं यथा तथा बद्धबिन्दुरपां निपातो वृष्टिरवनेः सम्बन्धिनीं सरजसतां सरजस्कत्वम् । 'अव्ययं विभक्ति' इत्यादिसूत्रेण साकल्यार्थेऽव्ययीभावः 'समासान्तनिपातश्च बहुव्रीह्यर्थेषु कल्पते । अव्ययीभावग्रहणं तु प्रायिकम्' इति केचित् । अपजहार । धूलिं शमयामासेत्यर्थः ॥२०॥

शीघ्र ही अर्जुन के आश्रम के अगल बगल में मालती के पुष्प विकसित हो गये । ... करके अल्प वृष्टि ने भूमि की धूलि को शान्त कर दिया ॥ २० ॥

प्रतिदिशमभिगच्छताभिमृष्टः ककुभविकाससुगन्धिनानिलेन ।
नव इव विबभौ सचित्तजन्मा गतधृतिराकुलितश्च जीवलोकः ॥ २१ ॥

प्रतिदिशमिति ॥ दिशि दिशि प्रतिदिशम् । यथार्थेऽव्ययीभावः । शरत्प्रभृतित्वात् समासान्तनिपातः । अभिगच्छता स्ववाता ककुभानि अर्जुनकुसुमानि । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । तेषां विकासेन सुगन्धिना मनोज्ञगन्धेन । गन्धस्येत्त्वे तदेकान्तग्रहणं प्रायिकम् । अनिलेनाभिमृष्टः संस्पृष्टोऽत एव सचित्तजन्मा । कामाक्रान्त इत्यर्थः । अत एव गतधृतिर्गतधैर्य आकुलितः क्षोभितश्च । रतिं प्रतीति भावः । एवम्भूतो जीवलोको नव इव अवस्थान्तरप्राप्त्या अपूर्व इव विबभौ भाति स्मेत्युत्प्रेक्षा ॥ २१ ॥

दुकूलमिव तद्वहन्ती । आत्ता गृहीता बाणा नीलझिण्टी यया सा आत्तबाणा, एतशरा च 'गृहीयात्तक्रिया शरम्' इति स्मरणात् । 'बाणोऽथ नीलझिण्टी च' इति वैजयन्ती । शरद्धूर्जायेव घनसमयेन वर्षर्तुना । वरेणेति शेष । अमलतले निर्मलतले सरोजं पाणिरिव तस्मिन् । आलक्ष्ये समूहे । कर्मणि लिट् । वधूवरसमागमवदृतुसंधिः शोभतेत्यर्थः । अत्र 'आत्तबाणा' इति श्लिष्टशरयोर्बाणयोरभेदाध्यवसायच्छेषमूला-तिशयोक्तिरूपमाङ्गमित्यनयोः सङ्करः ॥ २४ ॥

अब वर्षा का अवसान और शरद का प्रारम्भ है। वर्षाऋतु की उपमा वर के साथ और शरदृतु की उपमा वधू के साथ दी गई है। कुशाल-उन्तुरूप कड़ुए को, ( धारण करती हुई ) तथा कुमुदिनी के धवल वस्त्र को धारण करती हुई शरदरूपी वधू के जो नील झिण्टी के पुष्प को धारण करती है, सुकोमल करकमलों का आलम्बन वर्षाऋतुरूप वरने किया ॥ २४ ॥

अथ ऋतुसंधिं वर्णयति—

समदशिखिरुतानि हंसनादैः कुमुदवनानि कदम्बपुष्पवृष्ट्या ।
श्रियमतिशयिनीं समेत्य जग्मुर्गुणमहतां महते गुणाय योगः ॥ २५ ॥

समदेति ॥ समदशिखिरुतानि मत्तमयूरकूजितानि हंसनादैः समेत्य तथा कुमुदवनानि कदम्बपुष्पवृष्ट्या कदम्बपुष्पसंपदा समेत्य । अतिशयिनीमतिशयवर्तीं श्रियं जग्मुः । तथा हि—गुणमहतां गुणाधिकानां योगः परस्परसमागमो महते गुणायोत्कर्षाय । भवतीति शेष । अत्र क्रियाया समालंकारः—'सा समालङ्कृतिर्यो-ग्यवस्तुनोरुभयोरपि' इति लक्षणात् । सोऽपि चतुर्थपादार्थान्तरन्यासेन स्वसमर्थके-नाङ्गाङ्गिभावेन सङ्कीर्यते ॥ २५ ॥

इसके पहिले कवि ने वर्षाऋतु का वर्णन किया है। शरदऋतु के प्रारम्भ में वर्षा और शरद दोनों का सम्मिश्रण पाया जाता है उसी का वर्णन 'समदशिखि०' में किया गया है—

मदवाले मयूरों का कलकूजन राजहंसों के निनाद के साथ तथा कुमुदों के वन कदम्ब पुष्प की वृष्टि के साथ होकर अनुपम शोभा धारण करने लगे क्योंकि उत्कर्ष गुणों का संयोग अतुलनीय गुणों का पोषक ( वर्द्धक ) होता है ॥ २५ ॥

सरजसमपहाय केतकीनां प्रसवमुपान्तिकनीपरेणुकीर्णम् ।
प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि ॥२६॥

सरजसमिति ॥ प्रियमधुरसिमकरन्दा । नाम्न कप्समासान्त । 'पुलिङ्गोत्सरपदो बहुव्रीहिः' इति केचित् । नपुंसकलिङ्गस्यैव 'मधुशब्दस्योरमधुतिषु पाठात्' 'मकर-

अप्सरायें शरदृतु की विभूति दिखलाने के पश्चात् हेमन्त ऋतु के प्रादुर्भाव से अर्जुन के विक्षोभन के लिये प्रयत्न करने लगीं —

हेमन्त के प्रादुर्भाव होने पर प्रियङ्गुलता के पुष्प विकसित हो उठे। प्रफुल्लित कुन्द के गन्ध से पवन सुरभित हो उठा। हेमन्त के प्रारम्भ होने के कारण नीहारकण भी विरल विरल थे। इस प्रकार चिरकाल तक इस ऋतु ने अप्राप्त सम्भूत गुण की उत्कृष्टता को प्राप्त किया ॥ २८ ॥

निचयिनि लवलीलताविकासे जनयति लोध्रसमीरणे च हर्षम् ।
विकृतिमुपययौ न पाण्डुसूनुश्चलति नयान्न जिगीषतां हि चेतः ॥२९॥

निचयिनीति ॥ निचयिनि उपचयवति च लवलीलताया विकासे पुष्पविजृम्भणे तथा लोध्रसमीरणे हर्षं चोत्कण्ठां जनयति सति पाण्डुसूनुर्विकृतिं नोपययौ। कुतः। हि यस्मात्, जिगीषतां जेतुमिच्छतां चेतो नयान्नीतेर्न चलति। न हि क्रोधाक्रान्ते चेतसि शृङ्गाररसस्य विकासः। तद्विरुद्धत्वात्प्रकोपस्येति भावः ॥ २९ ॥

लवली नाम की लता के विकसित पुष्पों के समूह से तथा लोध्र सम्बन्ध से सुरभित वायु के द्वारा अर्जुन के मन में उत्कण्ठा हो रही थी तथापि उनका मन विकृत न हुआ क्योंकि विजयाभिलाषियों का चित्त नीतिपथ से विचलित नहीं होता ॥ २९ ॥

कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्रसिन्दुवारः ।
सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः ॥३०॥

कतिपयेति ॥ कतिपयैरेव सहकारपुष्पैरम्यतकुसुमै रम्य। न तु वसन्तवत्समग्रैः, नापि हेमन्तवदप्रवृत्तैरिति भावः। तनुतुहिनोऽल्पहिमः। न तु हेमन्तवद्बहुहिमः, नापि वसन्तवद्विरलतुहिन इति भावः। अल्पानि कतिपयान्येव विनिद्राणि सिन्दुवाराणि विकसितनिर्गुण्डीकुसुमानि यस्मिन् सः। अत्रापि सहकारवदभिप्रायो द्रष्टव्यः। 'सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः। सुरभिमुखं वसन्तप्रारम्भं हिमागमान्तं हेमन्तावसानं शंसति सूचयतीति स तथोक्तः। स्मरस्यैकबन्धुः सहकारी। उभयर्तुधर्मसम्पन्नत्वादिति भावः। शिशिरः समुपययौ ॥ ३० ॥

हेमन्त से भी अर्जुन का मन न डिगा तो अप्सराओं ने शिशिर के प्रादुर्भाव का प्रदर्शन किया —

शिशिरऋतु, जो कामदेव का एकमात्र सहायक है, प्रादुर्भूत हो गया। इसमें कहीं कहीं आम के मञ्जरियों के विकसित हो उठने से रम्य रहता है। इस ऋतु में (नीहार) हिमकण की न तो अधिकता रहती है और न विरलता तथा निर्गुण्डी अर्धविकास को प्राप्त हो जाता है। शिशिरऋतु वसन्त के प्रारम्भ तथा हेमन्त के अवसान का सूचक होता है।

अथ वसन्तमारम्भमाह—

कुसुमनगवनान्युपैतुकामा किसलयिनीमवलम्ब्य चूतयष्टिम्।
क्वणदलिकुलनूपुरा निरासे नलिनवनेषु पदं वसन्तलक्ष्मीः॥ ३१॥

कुसुमेति॥ कुसुमप्रधानानां नगानां वृक्षाणां कुसुमानां नगा वृक्षा वा तेषां वनानि। उपैतुमारोढुं कामो यस्याः सा। 'लोलवृत्तौ नगावगौ' इत्यमरः। 'तुम्काममनसोरपि' इति मकारलोपः। सा तत्लक्ष्मीः किसलयिनीं पल्लविनीं चूतयष्टिम्। चूतशाखामिवेति भावः। अवलम्ब्य अवष्टभ्य। अन्यथारोढुमशक्यत्वादिति भावः। क्वणत् सिञ्जमानं शब्दायमानमलिकुलं नूपुरमिव यस्याः सा तथोक्ता सती। 'क्वणदलिकुलनूपुरम्' इत्यपि पाठः। अन्यत्र—अलिकुलनूपुरम्। नलिनवनेषु पदं निरासे निदधे। तेषु प्रथमं प्रादुरासीदित्यर्थः। उपसर्गादस्यत्यूह्योर्वा इति वचनादात्मनेपदम्। अत्र प्रकृतवसन्तलक्ष्मीविशेषणसामर्थ्यादप्रस्तुतनायिकाव्यवहारसमारोपात्समासोक्तिरलङ्कारः॥ ३१॥

सुरसुन्दरियों ने देखा—जब सभी की चाह में सफलता प्राप्त न [redacted] तो ऋतुराज वसन्त को निमन्त्रण दिया —

प्रसून प्रधान पर्वतीयवनों में पहुँचने का अभिलाष किये हुये ऋतुराज ने नवपल्लवयुत आम्रयष्टि का सहारा लेकर सरोजिनी वन में नूपुरानुकारी भ्रमर कुल के गुञ्जार के साथ साथ पदार्पण किया॥ ३१॥

विकसितकुसुमाधरं हसन्तीं कुरबकराजिवधूं विलोकयन्तम्।
ददृशुरिव सुराङ्गना निषण्णं सशरमनङ्गमशोकपल्लवेषु॥ ३२॥

विकसितेति॥ विकसितो विकचः कुसुममेवाधरो यस्मिन्कर्मणि तद्यथा तथा हसन्तीं स्मयमानां कुरबकराजिरेव वधूस्तां विलोकयन्तम्। कामुकत्वेनेति भावः। अत एव अशोकपल्लवेषु पल्लवस्तरेषु निषण्णम्। स्थितमित्यर्थः। रिरंसयेति शेषः। सशरम्। निग्रहीतुमित्यादिति भावः। इत्थं शृङ्गारवीरयोरेकाधिकरणभूतम् अनङ्गं सुराङ्गना ददृशुरिवेत्युत्प्रेक्षा। अशोकपल्लवावलोकनान्मदनसाक्षात्कारादिव महान्मनःक्षोभस्तासामासीदित्यर्थः। अत्र रूपकोत्प्रेक्षयोः संसृष्टिः॥ [redacted]॥

वसन्त ऋतु में मानो सुराङ्गनाओं ने देखा—कामदेव ने बाण धारण कर अशोक किसलयों पर बैठकर कुरबक पंक्ति रूप वधू को जो हँस रही थी देखा। प्रफुल्लित पुष्प उस हास्य में अधर का काम कर रहे थे॥ ३२॥

मुहुरनुपतता विधूयमानं विरचितसंहति दक्षिणानिलेन।
अलिकुलमलकाकृतिं प्रपेदे नलिनमुखान्तविसर्पि पङ्कजिन्याः॥ ३२॥

मुहुरिति ॥ अनुपतता अनुधावता दक्षिणानिलेन मलयमारुतेन मुहुर्विधूयमान कम्पितम्, अत एव विरचिता संहतिर्येन । तत्समूतमित्यर्थः । पङ्कजिन्या यन्नलिनमुखमिव तस्य अन्तर्विसर्पि प्रान्तचारि । अलिकुलं कर्तृ अलकाकृतिमलकसादृश्य प्रपेदे ॥ ३३ ॥

बार बार सञ्चरण करते हुये दक्षिण दिशा के समीर से भ्रमरों का परिवार एक दूसरे पर उलझ पड़ता था । पद्मिनी के विकसित पुष्प के, जो मुखमण्डल के सदृश थे, चतुर्दिक गुञ्जार कर रहे थे इस कारण वह केशपाश की शोभा वहन करने लगे । अर्थात् मुख के चारों तरफ अलकें लटकी हुई रहती हैं उसी तरह मुखानुकारी कमलपुष्प के चारों तरफ घूमते हुये भ्रमर समूह दक्षिण पवन के झोंकों से परस्पर उलझ कर चिकुरजाल के सदृश मालूम पड़ने लगे ॥ ३३ ॥

श्वसनचलितपल्लवाधरोष्ठे नवनिहितेर्ष्यमिवावधूनयन्ती ।
मधुसुरभिणि षट्पदेन पुष्पे मुख इव शाललतावधूश्चुचुम्बे ॥ ३४ ॥

श्वसनेति ॥ षट्पदेन अलिना । शाललता सर्जतरुलता वधूरिव शाललतावधूः । 'प्राकारमहयो शाल शाल सर्जतरु स्मृत' इति सारस्वत । श्वसनेन वायुना निश्वासेन च चलित पल्लवोधरोष्ठ इव पल्लवाधरोष्ठो यत्र तस्मिन् । 'ओत्वोष्ठयो' समासे वा पररूप वक्तव्यम्' । मधुना मकरन्देन मद्येन च सुरभिणि सुगन्धिनि पुष्पे मुख इव नव यथा तथा निहितेर्ष्यं कृतकोपमिवेति क्रियाविशेषणम् । तथा, अवधूनयन्ती कम्पयन्ती । 'धूञ् प्रीञोर्नुग्वक्तव्य' इति णिचि नुगागम । चुचुम्बे चुम्बिता । अत्र 'श्वसन' शब्दार्थ 'मधु'शब्दार्थयोश्च श्लेषमूलाध्यवसायात्श्लेषमूलातिशयोक्ति । सा चोपमाङ्गमित्यनयो सङ्कर ॥ ३४ ॥

भ्रमर ने काँपती हुई शाललता वधू के पुष्प मुख का, जिसमें मकरन्द मद्य की गन्ध व्याप्त हो रही थी, चुम्बन किया । पवनरूप निश्वास से अधरानुकारी पल्लव हिल (स्फुरण) हो रहे थे । वह पुष्प-मुख मानो मानिनी के मुख का अनुकरण कर रहा था ॥ ३४ ॥

प्रभवति न तदा परो विजेतु भवति जितेन्द्रियता यदात्मरक्षा ।
अवजितभुवनस्तथा हि लेभे सिततुरगे विजय न पुष्पमास ॥ ३५ ॥

प्रभवतीति ॥ पर शत्रु । तदा तस्मिन्काले विजेतु न प्रभवति न शक्नोति । यदा जितेन्द्रियता इन्द्रियजयित्वम् । आत्मरक्षा भवति जायते । तथा हि—अवजितभुवनस्त्रैलोक्यविजयी पुष्पमासो वसन्त । सिततुरगेऽर्जुने विषये विजय न लेभे । अतो जितेन्द्रिया दुर्जया इत्यर्थ । विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार ॥ ३५ ॥

तबतक शत्रु विजय प्राप्त करने में समर्थ नहीं होता जबतक इन्द्रिय वश्यता रक्षा करने के लिये सन्नद्ध रहता है। त्रिभुवनविजयी वसन्त ऋतु अर्जुन पर विजय न प्राप्त कर सका क्योंकि अर्जुन के पास जितेन्द्रियता थी ॥ २५ ॥

अथ ग्रीष्मं वर्णयति—

कथमिव तव सम्मतिर्भवित्री सममृतुभिर्मुनिनावधीरितस्य ।
इति विरचितमल्लिकाविकासः स्मयत इव स्म मधुं निदाघकालः ॥२६॥

कथमिति ॥ विरचितमल्लिकाविकासो निदाघकालो ग्रीष्मो ऋतुभिरपरैर्विभिः सम मुनिनाऽवधीरितस्य तिरस्कृतस्य तव सम्मतिर्लोके योग्यत्वेनानुमतिर्मा मत्वा कथमिव भवित्री । न संमान कथंचित् सम्भवतीत्यर्थः । इति इत्थं मधुं वसन्तं । चैत्रे हैत्वे वसन्ते च जीवे। कोके मधु स्मृत इत विस्व। स्मयते स्मेव जहास किमिस्तु यत्ता । स्मङ् स्मे इति भूतार्थे लट्। प्रहासस्य शुभ्र बेन कविसमयसिद्धेर्मल्लिकाविकासे हास मध्यवसाय । अभ्रुतुभिः सममवधीरितस्येत्यत्राभेदाध्यवसायमूला सहोक्ति ल्कार । तव भवेदभिमतस्यावधीरणस्याभिमतत्वाध्यवसायात् तदेवावधीरणमसम्मति द्वारा स्मयोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्कर ॥ [illegible] ॥

जबतक भी अर्जुन से हार मान गये। अब निदाघ (ग्रीष्म) [illegible] देता—अर्जुन के द्वारा सम्पूर्ण ऋतुओं का तिरस्कार हो गया फिर तेरा सम्मान किस तरह हो सकेगा यह कहते मल्लिका को जो मनोहर हास के सदृश थी विकसित कर वसन्त को उसका हुआना पदार्पण किया ॥ २६ ॥

बलवदपि बलं मिथोविरोधि प्रभवति नैव विपक्षनिर्जयाय ।
भुवनपरिभवी न यत्तदानीं तमृतुगणः क्षणमुन्मनीचकार ॥ २७ ॥

बलवदिति ॥ बलवत् प्रबलमपि । प्रकृष्टामिति यावत् । मिथोविरोधि परस्पर स्पर्धि बलं सैन्यम् । वरूथिनी बलं सैन्यम् इत्यमरः । विपक्षनिर्जयाय शत्रुविज याय । 'तुमर्थाच्च इत्यादिना चतुर्थी । शक्रोत्पनुभवत्यर्थः । न प्रभवति न शक्नोत्येव । कुत । यत् यस्मात् कारणात् भुवनानां परिभवी जेतापि । जितेन्द्रिय— इत्यादि भैनिम यय । ऋतुगणस्तदानीम् । तम् अर्जुन क्षणमपि चोन्मनीचकारानुन्मनसमुन्म नम न चकार। 'अरमनश्चक्षु—' इत्यादिनाऽभूततद्भावे च्विप्रत्यय सलोपश्च । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ॥ २७ ॥

प्रबल होते हुये भी परस्परस्पर्धी सेना शत्रु के विजय में समर्थ नहीं होती क्योंकि त्रिलोक विजयी ऋतुओं का समूह क्षणभर के लिये भी उस तपस्वी (अर्जुन) को व्यग्र न कर सका ॥ २७ ॥

एव तटस्थस्योद्दीपनसामग्री विफलेत्युक्तम्, सम्प्रति विपरीता जातेत्याह—

श्रुतिसुखमुपवीणित सहायैरविरललाञ्छनहारिणश्च काला ।
अविहितहरिसूनुविक्रियाणि त्रिदशवधूषु मनोभव वितेनु ॥ ३८ ॥

श्रुतीति ॥ सहायैस्तासा सहचरैर्गन्धर्वै । कृतमिति शेष । 'न लोक-' इत्यादिना षष्ठीप्रतिषेध । कर्तरि तृतीया । श्रुतिसुख श्रोत्रमधुरम् । उपवीणित वीणयोपगानम् । 'सत्यापपाश-' इत्यादिना 'वीणा'शब्दाण्णिजन्तात्भावे क्त । अविरलैर्भूयोभिर्लाञ्छनै पूर्वोक्तै फलकुसुमादिभिश्चिह्नैर्हारिणो मनोहरा काला वसन्तादिऋतव । अविहिता-कृता हरिसूनोर्जुनस्य विक्रिया मनोविकृतिर्यैस्तानि तथाभूतानि सन्ति । 'नपुसक-मनपुसक-' इत्यादिना नपुसकैकशेष । त्रिदशवधूषु मनोभव वितेनुर्विस्तारयामासु । सोऽय परप्रहारार्थमुद्यतमायुध स्वात्मानमेव प्रहरतीति न्यायप्रजात इति भाव । अत्र मुनिविक्रियार्थे खोपा विक्रियारूपानर्थोत्पत्तिकथनाद्द्वितीयो विषमालङ्कार । तथा च सूत्रम्—'विरूपकार्यानर्थयोरुत्पत्तिविरूपसघटनाद्विषमालङ्कार' इति ॥ ३८ ॥

उन सुरसुन्दरियों के सहायक गन्धर्वों ने श्रोत्राभिराम वीणा बजाया, समय भी ऋतुओं के प्रादुर्भाव से फल-कुसुमादि चिह्नों द्वारा मनोहर था तथापि इन्द्रपुत्र (अर्जुन) का मन विकृत न हुआ जिसके कारण सुराङ्गनाओं पर कामदेव ने अपना प्रभाव जमाया ॥ ३८ ॥

तटस्थवदालम्बनगणोऽपि विपरीतोऽभूदिति श्लोकद्वयेनाह—

न दलति निचये तथोत्पलाना न च विषमच्छदगुच्छयूथिकासु ।
अभिरतिमुपलेभिरे यथासा हरितनयावयवेषु लोचनानि ॥ ३९ ॥

नेत्यादि ॥ आसा लोचनानि हरितनयावयवेषु यथा तथा दलति विकसति उत्पलानां निचयेऽभिरतिं नोपलेभिरे न प्रापु । तथा च विषमच्छदगुच्छा सप्तपर्ण-स्तबका यूथिका मल्लिकाश्च तास्वभिरतिं नोपलेभिरे । 'सप्तपर्णो विशालत्वक्शारदो विषमच्छद' इत्यमर । तथा रमणीयत्वात्तदुपमानाभावादित्यर्थ । इति चक्षु-प्रीतिरुक्ता ॥ ३९ ॥

इन सुरसुन्दरियों के नेत्र जितना अर्जुन के अङ्ग-प्रत्यङ्गों को देखकर प्रसन्न हुये उतना विकसित कमलों के समूह से तथा सप्तपर्ण के स्तवक और मालती से तृप्त न हुये ॥ ३९ ॥

अथ मन सङ्ग सूचयति—

मुनिमभिमुखता निनीषवो या समुपययु कमनीयतागुणेन ।
मदनमुपदधे स एव तासा दुरधिगमा हि गति प्रयोजनानाम् ॥४०॥

क्तायाः सपन्थि अलक्तकवर्तनया कोपारसरञ्जनेन अभिताम्रं निहितं न्यस्तं चरणं षट्पदाली कर्त्री धृता नवलोहितपङ्कजानामभिशङ्का प्रत्यग्रकोकनदभ्रमो यया सा। अभिपपाताभिधावति स्म। अत्र षट्पदाल्या स्त्रीचरणे पङ्कजभ्रमाभिधानाद् भ्रान्तिमदलङ्कारः। तेन चोपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः॥ ४२॥

रसभावादि व्यञ्जक चेष्टा विशेष पर ध्यान रखनेवाली सुररमणियों के चरण पर, जो महावर के विलेप से ताम्रवर्ण की अरुणिमा वहन करते थे, भ्रमरपंक्ति अभिनव अरुण कमल ( कोकनद ) की आशङ्का से टूट पड़ने लगी॥ ४२॥

अविरलमलसेषु नर्तकीनां द्रुतपरिषिक्तमलक्तकं पदेषु।
सवपुषमिव चित्तरागमूहुर्नमितशिखानि कदम्बकेसराणि॥ ४३॥

अविरलमिति॥ नमितशिखानि नर्तकीपादपीडनाद्वनमिताग्राणि कदम्बकेसराणि। रक्तपूजादत्तानीति शेषः। अविरलं सान्द्रं यथा तथा द्रुतो रागोष्मणा विगलितोऽत एव परिषिक्तः प्रसृतस्तं द्रुतपरिषिक्तं नर्तकीनामलसेषु पदेषु पादन्यासेषु। अलक्तकं लाक्षारागं सवपुषं मूर्तिमन्तं चित्तरागमुत्कटतया कायाद्बहिर्निःसृतं भूमिविषयकं रागमित्युत्प्रेक्षा। ऊहुर्वहन्ति स्म॥ ४३॥

रक्त पूजामें समर्पित कदम्ब केसर, जिनके शिखाओं का अग्र भाग झुक गया था, नर्तन क्रिया में रत अप्सराओं के चरणों में, जो स्थूलता से आलस्यपूर्ण थे, सलक्त लाक्षाराग को ऊष्मासे द्रवित साक्षात् मूर्तिधारी अनुराग के सदृश धारण किये॥ ४३॥

अथास्या व्यञ्जकचेष्टां कथयति—

नृपसुतमभितः समन्मथायाः परिजनगात्रतिरोहिताङ्गयष्टेः।
स्फुटमभिलषितं बभूव वध्वा वदति हि संवृतिरेव कामितानि॥४४॥

नृपेति॥ नृपसुतमर्जुनमभितः सम्मुखं परिजनस्य सखीजनस्य गात्रेण तिरोहिता लज्जया स्वाकारगोपनायान्तर्हिताङ्गयष्टिर्यस्याः सा तस्याः समन्मथायाः वध्वाः। अभिलषितं मुनिं प्रत्यनुरागः स्फुटो बभूव। न च संव्रियमाणस्याभिव्यक्तिर्विरुद्धेति वाच्यमित्याह—यतः संवृतिः सम्यग्गोपनमेव कामितानि अनुरागान्। कामयतेर्भावे क्तः। वदति हि। प्रकटयतीत्यर्थः। अयमनुरागस्य स्वभाव उक्तः। यया चेष्टया रागः संव्रियते सैवास्य प्रकाशिका जायत इति भावः॥ ४४॥

काम से पीड़ित एक अमरललना का, जो अर्जुन के सम्मुख आने पर सखियों के शरीर से अपने अङ्ग को तिरोहित कर रही थी, अनुराग, जो अभिलषित अर्जुन के प्रति था, व्यक्त हो गया ( छिपाने से भी छिप न सका ) क्योंकि सम्यक् गोपनचेष्टा ही अनुराग को व्यक्त कर देती है ( यह अनुराग का स्वभाव है कि जिस चेष्टा के द्वारा उसे निगूहित किया जाता है वह उसकी द्योतिका होती है )॥ ४४॥

अभिमुनि सहसा हृते परस्या घनमरुता जघनांशुकैकदेशे।
चकितमवसनोरु सत्रपायाः प्रतियुवतीरपि विस्मयं निनाय॥ ४५॥

अभिमुनीति॥ अभिमुनि मुनिसमक्षं घनेन महता जघनांशुकस्यैकदेशे सहसा हृते सति सत्रपायाः सलज्जायाः परस्याः संबन्धि अवसनौ निरावरणौ ऊरू यस्मिंस्तत्। चकितं भयसंभ्रमः प्रतियुवतीरपि सपत्नीरपि विस्मयं निनाय। किमुतान्यजनमित्यपिशब्दार्थः। न तु मुनिमित्याशयः॥ ४५॥

तपस्वी अर्जुन के सम्मुख वायु के झोंके से अन्य किसी नायिका के जघन वसन (वस्त्र) के हटाये जाने पर लज्जाभाराक्रान्त युवती के चमत्कार ने जिसमें विवस्त्र जघन ही कारण था सपत्नीजनों को भी आश्चर्य चकित कर दिया अन्य लोगों का कहना क्या? पर सब कुछ होते हुये भी अर्जुन का मनने मर्यादा को भङ्ग न किया॥ ४५॥

धृतबिसवलये निधाय पाणौ मुखमधिरूपितपाण्डुगण्डलेखम्।
नृपसुतमपरा स्मराभितापादमधुमदालसलोचनं निदध्यौ॥ ४६॥

धृतेति॥ अपरा स्त्री स्मराभितापात् हेतोः। वलयानि बिसान्येव वलयानि येन तस्मिन् पाणावधिरूपिते चन्दनादिचर्चिते पाण्डू गण्डलेखौ गण्डस्थले यस्य तत्। मुखं निधायारोप्य। अमधुमदे मधुमदरहिते तथापि अलसे लोचने यस्मिन्कर्मणि तद्यथा तथा तं नृपसुतं निदध्यौ पश्यति स्म। निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् इत्यमरः॥ ४६॥

एक दूसरी सुराङ्गना ने कामदेव से संतप्त होकर अपने हाथ में मृणाल तन्तु का (कमल के डण्ठल के भीतर का सफेद रेशा) कङ्कण धारण कर लिया था। उसी करतलप्रदेश पर मुख विन्यस्त चन्दन विलेप के कारण चन्दन की रेखा और कपोल पाण्डुवर्ण के हो गये थे रखकर यद्यपि मधुमद नहीं था तथापि अलसाये हुये नेत्रों से तपस्वी (अर्जुन) को देखने लगी॥ ४६॥

अथ पञ्चभिर्मुनिं प्रति दूतीवाक्यमाह—

सखि दयितमिहानयेति सा मां प्रहितवती कुसुमेषुणाभितप्ता।
हृदयमहृदया न नाम पूर्वं भवदुपकण्ठमुपागतं विवेद॥ ४७॥

सखीति॥ कुसुमेषुणा कामेनाभितप्ता पीडिता सा नायिका। हे सखि! दयितं मुनिम्। इहानयेति मां प्रहितवती भवदन्तिकं प्रेषितवती। किं स्वविसृष्टत्वकारिणीयमित्याह—हृदयमिति। अहृदया अमनस्का। तस्यास्त्वद्गतत्वादिति भावः। अत एव सा पूर्वं प्रागेव भवदुपकण्ठं त्वत्समीपम्। उपागतं हृदयं मनो न विवेद। नाम संभावनायाम्। अतो मत्प्रार्थनं व्यर्थं तस्यामन्तरङ्गस्याद्बहिरङ्गस्य दुर्लभत्वादिति भावः। एतेन मनःसङ्ग उक्तः। चक्षुःप्रीतिस्तु प्रागेव सर्वासामुक्तेति न पृथगुच्यते॥ ४७॥

श्लोक संख्या ४७-५१ तक मुनि के प्रति दूती के वाक्य हैं —

उस सुरबालाने कामदेव से पीडित होकर "हे सखि ! उस प्राणाधार तपस्वी को यहाँ बुला लाओ" इस प्रकार से आदेश देकर मुझे भेजा है, हृदय ( मन ) को प्रथम ही उसने आपके समीप सम्प्रेषित कर दिया, अब वह हृदयहीन होने के कारण उसने नहीं जाना कि हृदय तो मैंने उनके पास भेज दिया, फिर दूती क्यों भेजती हूँ ॥ ४७ ॥

'रक्तमन सङ्कल्पा जागर कृशता रति । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥' इति । तत्राद्यमवस्थाद्वयमस्यवाचि । सम्प्रति काश्चित् क्रमनैरपेक्ष्येण सूचयति—

चिरमपि कलितान्यपारयन्त्या परिगदितुं परिशुष्यता मुखेन ।

गतघृण गमितानि सत्सखीनां नयनयुगैः सममार्द्रतां मनांसि ॥४८॥

चिरमिति ॥ चिरं कलितान्यपि सन्देशार्थं बुद्ध्या योजितान्यपि । वचनानीति शेषः । परिशुष्यता मुखेनेति जागरोक्तिः । परिगदितुमपारयन्त्याऽशक्नुवत्या तया । हे गतघृण ! अद्यापि त्वं नानुकम्पस इति भावः । सत्सखीनां मनांसि नयनयुगैः सममार्द्रतां गमितानि । उभयत्र गमितानीत्यर्थः । शोकबाष्पैरिति भावः । अत्र सखीशोकोक्त्या मूर्च्छावस्था सूच्यते । अत्र शोकबाष्परूपकारणभेदात् प्रतियोगिभेदात्कार्यस्यैक्येऽप्यभेदाध्यवसाय । तन्मूला चेयं नयनयुगैः सममिति,सहोक्तिरलङ्कारः ॥ ४८ ॥

बहुत दिनों से सन्देश भेजने के विचार से पहले ही से मनमें सोचे गये वचनों को भी बतानेमें मुख शीघ्र होने के कारण व्यक्त करने में वह ( नायिका ) अपने को असमर्थ पाती है । हे कठोर हृदय, [ अर्थात् अब भी उस पर ध्यान नहीं करते हो ] तेरे सखियों के अन्तःकरण दोनों नेत्रों के साथ साथ आर्द्र हो गये हैं अर्थात् शोकाश्रुओं से भीग गये हैं ॥ ४८ ॥

अचकमत सपल्लवां धरित्रीं मृदुसुरभिं विरहय्य पुष्पशय्याम् ।

भृशमरतिमवाप्य तत्र चास्यास्तव सुखशीतमुपैतुमङ्कमिच्छा ॥ ४९ ॥

अचकमतेति ॥ किं वाच्यं चेत्साह—सा स्त्री मृद्वी सुरभिश्च या तां मृदुसुरभिं पुष्पशय्यां विरहय्य विहाय सपल्लवां धरित्रीम् । अचकमत ऐच्छत् । तस्यास्ततोऽपि शीतलत्वादिति भावः । कमेर्णिङन्ताल्लुङ् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति द्विर्भाव इति केचित् । तन्न । अचीकमतेति प्रसङ्गात् । अतो णिङभावपक्षे 'कमेश्च्लेश्चङ् वक्तव्य ' इति चङ्यचकमतेति रूपमेतत् । अस्या नायिकायाः । तत्र धरित्र्यामपि भृशमरतिं तु लब्ध्वा । अवाप्य । सुखयतीति सुखं शीतं शीतलञ्च तं सुखशीतं तवाङ्कमुत्सङ्गम् । उपैतुमिच्छा । वर्तत इति शेषः । अस्याश्चौत्सुक्यं कथितम् । अत्रारतिजागरौ

मनुसन्धेयम् । तदुक्तम्—'एकत्र चेदनुरागस्तिर्यङ्म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥' इति । तन्निबन्धनादूर्जस्वलमलङ्कारः । तथा च सूत्रम्—'रसभेदतदाभासतत्प्रशमानां निबन्धने रसवत्प्रेयऊर्जस्वलसमाहितानि' इति । [ समाहितातिरसबन्धे रसवदलङ्कारः । भावनिबन्धेन प्रेयोऽलङ्कारः । रसभावनिबन्धे ऊर्जस्वलालङ्कारः । तत्प्रशमनिबन्धे समाहितालङ्कार इति सूत्रार्थः ] ॥ ५१ ॥

पारुष्य ( निष्ठुरता ) का परित्याग कीजिये । वाग्दान दीजिये । क्योंकि तपस्विजन का हृदय करुणा से कोमल होता है । किन्तु भाग्यहीन व्यक्ति प्राप्त वस्तु की अवहेलना करते हैं । इस प्रकार किसी कामपीडित सुराङ्गना का सन्देश किसी दूतीने आकर अर्जुन के प्रति निवेदन किया ॥ ५१ ॥

सललितचलितत्रिकाभिरामा शिरसिजसंयमनाकुलैकपाणिः ।
सुरपतितनये परा निरासे मनसिजजैत्रशरं विलोचनार्धम् ॥ ५२ ॥

सललितेति ॥ सललितं सविलासं यथा तथा चलितेन विवर्तितेन त्रिकेण कटिभागेन । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः । अभिरामा । शिरसि जाताः शिरसिजाः । 'सप्तम्यां जनेर्डः' । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इत्यलुक् । 'उपपदमतिङ्' इति समासः । एतेन मनसिजो व्याख्यातः । तेषां संयमने बन्धने आकुलो व्यग्र एकः पाणिर्यस्याः सा । परा काचित् सुरपतितनयेऽर्जुने । जेतैव जैत्रः । 'जेतृ'शब्दात्तृजन्तात् 'प्रज्ञादिभ्यश्च' इत्यण्प्रत्ययः । मनसिजस्य जैत्रं शरस्तं तथाभूतम् । विलोचनस्यार्धमेकदेशम् । कटाक्षमित्यर्थः । निरासे विससर्ज ॥ ५२ ॥

अन्य सुरबालाने जिसका त्रिक ( कटिभाग ) सविलास चल रहा था, और जिसका एक हाथ केशपाश के बाँधने में लगा हुआ था, कामदेव के अमोघ बाणभूत कटाक्ष को देवेश के पुत्र ( अर्जुन ) पर प्रक्षेप किया ॥ ५२ ॥

कुसुमितमवलम्ब्य चूतमुच्चैस्तनुरिभकुम्भपृथुस्तनानताङ्गी ।
तदभिमुखमनङ्गचापयष्टिर्विसृतगुणेव समुन्ननाम काचित् ॥ ५३ ॥

कुसुमितमिति ॥ इभकुम्भवत् पृथुभ्यां स्तनाभ्यामानतमङ्गं यस्याः सा । 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीष् । काचित् तनुस्तन्वी । 'वोतो गुणवचनात्' इति विकल्पान्न ङीष् । कुसुमितमुच्चैरुन्नतं चूतमवलम्ब्य । अत एव चूतलतायोगाद्विसृतो विस्तृतो गुणो ज्या यस्याः सा । 'विसृतं विस्तृतं ततम्' इति, 'मौर्वी ज्या शिञ्जिनी गुणः' इति चामरः । अनङ्गचापयष्टिरिव । आकृष्टमुक्तेति भावः । तदभिमुखं समुन्ननाम समुज्जजृम्भे । अङ्गभङ्गं चकारेत्यर्थः ॥ ५३ ॥

किसी और कृश देवबाला ने, जो हाथी के कपोल के समान स्थूल कुचों के भार से झुकी जाती थी, विकसित, उच्च आम्र की शाखा का—जो विस्तृत धनुष की प्रत्यञ्चा के सदृश था, अवलम्बन करके कामदेव के धनुष दण्ड के समान आकृष्ट कर छोड़ दी ॥ ५३ ॥

मानोऽभिमानो लज्जा च यया तथा । कयाचित् । असौ मुनि । उरसि स्वय स्वह-स्तेनैव श्रवणोत्पलेन जघ्ने हत ॥ ५६ ॥

इस प्रकार के वाक्य कह कर किसी दूसरी नायिका ने, जिसके अधर पुट जुगुप्सा [illegible] कारण फड़क रहे थे, अपने अभिमान और लज्जा का कुछ भी विचार न करके कुटिल दृष्टि करती हुई कर्णोत्पल [illegible] स्वय अर्जुन के हृदय में मारी ॥ ५६ ॥

सविनयमपराभिसृत्य साचि स्मितसुभगैकलसत्कपोललक्ष्मी ।
श्रवणनियमितेन त निदध्यौ सकलमिवासकलेन लोचनेन ॥ ५७ ॥

सविनयमिति ॥ अपरा सविनयमनौद्धत्येन । साचि तिर्यक् । अभिसृत्य समीप गत्वा स्मितेन मन्दहासेन सुभगा एकस्य लसत कपोलस्य लक्ष्मी यस्या सेति बहुवचनपद्योत्तरो बहुव्रीहि । अन्यथा कप्प्रत्यय स्यादित्युक्त प्राक् । श्रवणनियमितेन कर्णान्तप्रापितेन श्रोत्रलब्धप्रसरेण । तावदायतेनेत्यर्थं । असकलेनासपूर्णेन, कटाक्षेणेति यावत् । लोचनेन त मुनिं धनजय सकलमिव समग्रमाप यथा तथा निदध्यौ पश्यति स्म । कटाक्षेणैव गाढमद्राक्षीदित्यर्थ । एषु श्लोकेषु भावाभासनि-बन्धादूर्जस्वलालङ्कार । औत्सुक्यमत्र भाव । आभासत्व चास्य विरक्तमुनावनौचि-त्यादित्युक्त प्रागेवेति ॥ ५७ ॥

एक सुरसुन्दरी, विनीत भाव से समीप जाकर मन्दहास करने लगी जिससे उसके कपोल परम सुशोभित हो रहे थे । वह कर्णपर्यन्त विस्तृत अर्धनिमीलित नेत्र [illegible] ध्यान पूर्वक देखने लगी ॥ ५७ ॥

अथ तासा मुनिविलोभनमुपसहरति—

करुणमभिहित त्रपा निरस्ता तदभिमुख च विमुक्तमश्रु ताभि ।
प्रकुपितमभिसारणेऽनुनेतु प्रियमियती ह्यबलाजनस्य भूमि ॥ ५८ ॥

करुणमिति ॥ ताभि स्त्रीभि । तदभिमुख मुनिसमक्ष करुण दीनमभिहितमुक्तम् । त्रपा निरस्ता लज्जा त्यक्ता । किंबहुना, अश्रु च विमुक्तम् । तत पर न किंचिद्विधेय-मासीदिति भाव । कुत । हि यस्मात्, अबलाजनस्याभिसारणे समागमविषये प्रकुपितमनुकूल प्रियमनुनेतुमनुकूलयितुम् । इयती भूमिरित्येतावती सीमा । साध नाना परमावधिरिति भाव । अर्थान्तरन्यासोऽलकार ॥ ५८ ॥

वे सुरसुन्दरियां दीनतापूर्वक अर्जुन के समक्ष बोलीं, लज्जा छोड़ी और कहा तक कहा जाय आंसुओंकी धारायें बहाई । इससे अधिक वे क्या कर सकती थीं क्योंकि समागममें प्रतिकूल प्रियको अनुकूल बनानेके लिए अबलाजनोंके साधनोंकी सीमा भी यहीं तक है ॥५८॥

अथासामनुरागदार्ढ्य निगमयति—

असकलनयनेक्षितानि लज्जा गतमलस परिपाण्डुता विषाद ।
इति विविधमियाय तासु भूषा प्रभवति मण्डयितु वधूरनङ्ग ॥ ५९ ॥

रुचिकरमपि नार्थवद्बभूव स्तिमितसमाधिशुचौ पृथातनूजे ।
ज्वलयति महतां मनांस्यमर्षे न हि लभतेऽवसरं सुखाभिलाषः ॥६२॥

रुचिकरमिति ॥ पूर्वोक्तं रुचिकरं स्पृहाजनकमपि । 'रुचिः कान्त्यर्चिषोर्भासि स्त्रियां शोभास्पृहार्थयोः' इति वैजयन्ती । स्तिमितेन स्थिरेण समाधिना तपोयोगेन शुचौ शुद्धे । निर्विकारचेतसीत्यर्थः । पृथातनूजेऽर्जुने विषये । अर्थवत् सप्रयोजनं न बभूव । तथा हि—महतां धीराणां मनांस्यमर्षे क्रोधे ज्वलयति सति सुखाभिलाषोऽवसरमवकाशं न लभते । रौद्रस्य शृङ्गारविरोधित्वादिति भावः । अत्र विशेषकेऽर्थान्तरन्यासोऽलङ्कारः ॥ ६२ ॥

यद्यपि सुरसुन्दरियों के सभी मनोमोहक प्रयोग हृदयहारी थे तथापि वे अविचल समाधि के कारण अविकृत चित्त वाले अर्जुन के विषय में सफल न हो सके, क्योंकि क्रोध के उद्दीप्त होने पर धीर पुरुषों के मन में सुख की लिप्सा स्थान नहीं पाती ॥ ६२ ॥

स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते ।
मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रतिययुः ॥ ६३ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये दशमः सर्गः ।

स्वयमिति ॥ एवं हरिसुतेऽर्जुने स्वयमखण्डेनाविच्छिन्नेन तपसा शतमखमिन्द्रं संराध्य प्रीणयित्वा परोच्छित्त्या शत्रुवधेन लभ्यां साध्यां लक्ष्मीं राज्यलक्ष्मीम् । अभिलषति सति सोद्वेगैः कार्यसिद्ध्यभावात्सनिर्वेदैर्मनोभिरुपलक्षिताः । किंच, प्रणयविहत्या प्रार्थनाभङ्गेन ध्वस्तरुचयो नष्टकान्तयः सगन्धर्वा गन्धर्वसहितास्त्रिदशवनिताः स्वं धाम स्वस्थानं प्रतिययुः । शिखरिणीवृत्तमेतत्—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणात् ॥ ६३ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां दशमः सर्गः समाप्तः ॥

इन्द्र तनय ( अर्जुन ) अविच्छिन्न तपश्चर्या के द्वारा शतक्रतु ( इन्द्र ) को स्वयं आराधित करके शत्रुवध के द्वारा प्राप्त होने योग्य राज्यश्री की अभिलाषा कर रहे थे। उनमें जिन अप्सराओंके सम्पूर्ण यत्न विफल हो गये उनका मन उद्विग्न हो उठा। प्रणयविषयिणी याञ्चा के विफल होने के कारण उनके शरीर की कान्ति विरस हो गई और वे गन्धर्वों को लिये दिये अपने निवासस्थान ( अमरावती इन्द्र की नगरी ) को चली गईं ॥ ६३ ॥

दशम सर्ग समाप्त



इव स्थित । तस्याप्युपपरिणतरूपत्वाद्वृद्धोपमानत्वम् । जटाया सहत्वेयुक्तत्वात् सध्यासाम्यम् ॥ ३ ॥

सुरराज ( इन्द्र ) धवलित केशों से व्याप्त जटाओं की संहति से उपलक्षित होकर चन्द्रमा की किरणों से युक्त सन्ध्या से व्याप्त दिवसावसान के सदृश दिखलाई पड़ते थे ॥३॥

विशदभ्रूयुगच्छन्नवलितापाङ्गलोचन ।

प्रालेयावततिम्लानपलाशाब्ज इव ह्रद ॥ ४ ॥

विशदेति ॥ पुनश्च, विशदेन पलितपाण्डुरेण भ्रूयुगेन छन्ने वलितापाङ्गे वलिमप्रान्ते लोचने यस्य स तथोक्त 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमर । पामादित्वाल्लोमादिसूत्रेण मत्वप्रत्यय । प्रालेयावतत्या हिमसहत्या म्लानपलाशानि म्लानदलानि अब्जानि यस्मिन्स ह्रद इव स्थित ॥ ४ ॥

पलित पाण्डुर वर्ण के भौंहों से उन ( इन्द्र ) के दोनों नेत्र ढके हुए से थे । उन नेत्रों के कोनों में सिकुड़न पड़ गई थी । वे ( इन्द्र ) तुषार के ढेर से मुरझाये [illegible] कमल दल से व्याप्त सरोवर के सदृश मालूम पड़ते थे ॥ ४ ॥

आसक्तभरनीकाशैरङ्गैः परिकृशैरपि ।

आधून सद्गृहिण्येव प्रायो यष्ट्यावलम्बित ॥ ५ ॥

आसक्तेति ॥ पुनश्च, परिकृशैः परिक्षीणैरपि, आसक्तभरनीकाशैराक्रान्तसदृशै । समारोपितगुरुभारैरित्यर्थ । 'इक काशे' इति दीर्घ । अङ्गैरुपलक्षित । कार्श्याल्लघून्यपि स्वाङ्गानि स्वय वोढुमसमर्थ इत्यर्थ । अत एव आधून औदरिक । 'आधून स्यादौदरिको विजिगीषाविवर्जिते' इत्यमर । आङ्पूर्वाद्धीप्यते क्त । 'ओदितश्च' इत्यूठादेश । 'दिवोऽविजिगीषायाम्' इति निष्ठानत्वम् । सद्गृहिण्याऽनुकूलकलत्रेण इव प्राय प्राचुर्येण यष्ट्याऽवलम्बनेन । अवलम्बितो धारित । [illegible] तु स्वशक्त्येति भाव ॥ ५ ॥

सुरराज ( इन्द्र ) के अङ्ग दुर्बल थे अत भार से दबे हुए के सदृश प्रतीत होते थे । लाठी के सहारे चलते हुए बड़े पेटवाले पुरुष के सदृश मालूम पड़ते थे, जो अपनी स्त्री के सहारे उठता बैठता है ॥ ५ ॥

गूढोऽपि वपुषा राजन् धाम्ना लोकाभिभाविना ।

अशुमानिव तन्वभ्रपटलच्छन्नविग्रह ॥ ६ ॥

गूढ इति ॥ वपुषा गूढोऽपि । प्रच्छन्नरूपोऽपीत्यर्थ । प्रकृत्यादिभ्य उपसंख्यानात् तृतीया । तन्वभ्रपटलच्छन्नविग्रह स्तोकाभ्रवृन्दान्तरितमूर्ति । अशुमानिव लोकाभिभाविना लोकव्यापिना धाम्ना तेजसा । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयो' इति हेमचन्द्र । राजन् दीप्यमानो ददृश इति पूर्वेण सबन्ध ॥ ६ ॥

यद्यपि इन्द्रदेव प्रच्छन्न होकर चलते थे तथापि संसार व्यापी तेज से उस वृक्ष की तरह दीप्त हो रहे थे जो ( वृक्ष ) दरके पत्तों की तरह से ढका हुआ रहता है ॥ ६ ॥

जरतीमपि बिभ्राणस्तनुमप्राकृताकृतिः ।
चकाराक्रान्तलक्ष्मीकः ससाध्वसमिवाश्रमम् ॥ ७ ॥

जरतीमिति ॥ जरतीं जीर्णाम् । जीर्णे जीर्णो जरन्नपि इत्यमरः । जीर्यतेरतृन्निति शतृप्रत्ययः । 'उगितश्च' इति ङीप् । तनुं शरीरं बिभ्राणोऽपि दधदपि । अप्राकृताऽलोकसामान्या आकृतिर्मूर्तिर्यस्य स इन्द्र आक्रान्ताऽभिभूता लक्ष्मीराश्रमशोभा येन स आक्रान्तलक्ष्मीकः । अत्र 'उरःप्रभृतिभ्यः कप्' इति नित्यकप्प्रत्ययः । एकवचनान्तोत्तरपदस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठात् । 'शेषाद्विभाषा' इति विकल्पाश्रयणे तु बहुवचनोत्तरपद इति विवेकः । आश्रमं ससाध्वसमिव चकार । शैलशिखरस्थभानुरिव भाति । तथा न तु उत्प्रेक्षायां तस्यामनुपपत्तेरिति सूर्यमित्यत्र इव शब्दः ॥ ७ ॥

जीर्ण तथापि अलौकिक शरीर धारण किये हुये इन्द्र ने आश्रम की शोभा को आक्रान्त करके आश्रम को भयाकुल की तरह कर दिया ॥ ७ ॥

अभितस्तं पृथासूनुः स्नेहेन परितस्तरे ।
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः ॥ ८ ॥

अभित इति ॥ पृथासूनुरर्जुनः । तम् इन्द्रम् । अभितस्तम् अभि स्नेहेन प्रीत्या परितस्तरे । तद्गौरवेण प्रेम्णा व्याप्तः । स्तृणाते कर्मणि लिट् । अत्रत्य सम्बन्धाद्गुणः इति गुणः । ननु अज्ञातस्य पित्रोपत्यस्य तस्ये मे कथं स्नेहोदय इत्यत आह—अविज्ञात इति । बन्धौ सुहृदि । अविज्ञातेऽपि वस्तुस्वाभाव्यात्तेऽपि बलाद्धृदयस्यजनसम्बन्धेन मनः प्रह्लादते हि विस्मृतोऽप्यर्थः ॥ ८ ॥

इन्द्र के पास बैठे हुये पृथासुत ( अर्जुन ) स्नेह से परिप्लुत हो गये । क्योंकि अगर अपने बान्धव को कोई नहीं पहचान सकता है तथापि उसके प्रति मन बलात् हर्षोद्रेक होता है ॥ ॥

आतिथेयीमथासाद्य सुतादपचितिं हरिः ।
विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥ ९ ॥

आतिथेयीमिति ॥ अथ हरिरिन्द्रः सुतादर्जुनात् । आतिथेयीम् अतिथिषु साध्वीम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । अपचितिं पूजाम् । आसाद्य प्राप्य । पूजा नमस्यापचितिः इत्यमरः । विष्टरे आसने । 'वृक्षासनयोर्विष्टरः' इति षत्वम् । विश्रम्य नाम विश्रम्य किल । श्रमस्यापनीयेत्यर्थः ।

इति वक्ष्यमाणप्रकारां भारतीं व्याजहार उक्तवान् । 'व्याहार उक्तिर्लपितम्' इत्यमर ॥ ९ ॥

सुरेन्द्र ( इन्द्र ) पुत्र से आतिथ्य सत्कार के उपयुक्त पूजा ग्रहण करके थोडी देरतक आसन पर विश्राम करके ( अर्जुन से ) बोले ॥ ९ ॥

अथ प्रथमं तावन्मुनिवदेन मुमुक्षु कृत्वाह—

त्वया साधु समारम्भि नवे वयसि यत्तप ।
ह्रियते विषयै प्रायो वर्षीयानपि मादृश ॥ १० ॥

त्वयेति ॥ त्वया साधु समारम्भि सम्यगुपक्रान्तम् । रभे कर्मणि लुङ् । कुत ? यत् यस्मात् । नवे वयसि यौवने । तप चर्यत इति शेष । तथा हि—अहमिव दृश्यतेऽसौ मादृशो वर्षीयानतिवृद्धोऽपि । 'प्रियस्थिर—' इत्यादिना 'वृद्ध' शब्दस्य वर्षादेश । प्रायो विषयैर्ह्रियत आकृष्यते । किमु भवादृशो यवीयानिति भाव ॥ १० ॥

इन्द्र ने कहा'—

तुमने अच्छा किया जो इस अल्पावस्था में ही तपश्चर्या आरम्भ कर दिया, मुझ जैसे व्यक्ति अधिक अवस्था के होते हुये भी विषयों के द्वारा आकृष्ट हो जाते हैं ॥ १० ॥

अथैवमनारम्भे तव स्वाकारकामोऽपि विफल स्यादित्याशयेनाह—

श्रेयसीं तव सम्प्राप्ता गुणसंपदमाकृति ।
सुलभा रम्यता लोके दुर्लभ हि गुणार्जनम् ॥ ११ ॥

श्रेयसीमिति ॥ तवाकृतिर्मूर्ति । रम्येति शेष । श्रेयसीं श्रेष्ठा गुणसंपद तपसमारम्भरूपा सम्प्राप्ता । अतो न निष्फलेति भाव । न च स्वाकारा गुणाढ्याश्च कियन्तो कियन्तो न सन्तीति वाच्यमित्याह—लोक इति । लोके रम्यता रम्याकारता सुलभा हि, गुणार्जनं गुणसंपादनं दुर्लभम्, त्वयि तूभयं संपन्नं इति हेम्न परमामोद इति भाव ॥ ११ ॥

तुम्हारी आकृति परम रम्य है, कल्याण कारी गुणो की सम्पत्ति भी तुम्हें मिल गई है सौन्दर्यका तो संसार में मिलना कोई कठिन बात नहीं है परन्तु गुणों का प्राप्त करना कठिन काम है। तुममें तो सौन्दर्य और गुण दोनों मिलते हैं, ये तुम्हारे लिये सोने में सुगन्ध का काम देते हैं ॥ ११ ॥

यदुक्तम् 'त्वया साधु समारम्भि' ( श्लो० १० ) इति, तदेव साधुत्वं संसारासारताप्रतिपादनाय श्लोकेनोपपादयति—

शरदम्बुधरच्छायागत्वर्यो यौवनश्रिय ।
आपातरम्या विषया पर्यन्तपरितापिन ॥ १२ ॥

शरदिति ॥ यौवनश्रियस्तावत् शरदम्बुधरच्छाया इव गत्वर्यश्चपला । गत्वरश्च इति करबन्तो निपातः । टिड्ढाणञ्— इत्यादिना ङीप् । विषयाः शब्दादयस्तु आपातरम्यास्तत्कालरमणीयाः । 'तदात्वे पात आपातः' इति वैजयन्ती । पर्यन्तेऽवसाने परितापयन्ति दुःखं कुर्वन्तीति तथोक्ताः ॥ १२ ॥

युवावस्था की शोभा शरत्काल के मेघ की तरह चञ्चल है ( जैसे शरत्काल का बादल आया और गया ) शब्दादिक जो समस्त इन्द्रियों के विषय हैं वे उसी काल में रम्य प्रतीत होते हैं परन्तु अन्तिमावस्था में सन्ताप प्रद ही होते हैं ॥ १२ ॥

> अन्तक पर्यवस्थाता जन्मिनः सन्ततापदः ।
> इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ [redacted] ॥

अन्तक इति ॥ नित्यं सन्तता अविच्छिन्ना आपदः क्लेशा यस्य तस्य जन्मिनः प्राणिनः । प्राणी तु चेतनो जन्मी इत्यमरः । व्रीह्यादित्वादिनिः । अन्तको मृत्युः पर्यवस्थाता प्रतिरोद्धा । प्रथमं तावद्गर्भस्थो जन्मदुःखमेव दुस्तरम् ततो जातस्य जीवनमपि सततं दुःखाभिभूततया विपद्बहुलमेवास्ति तदपि मृत्युमत्तमिति सोऽप्यन्तकालस्य शत्रोरिव [ दुर्गन्धि विविधसङ्कुलम् । श्लेष्मरूपयन् सुरासिक्तम् ] एवमपि तदपि दुर्लभम् ॥ इति व्यासादिभिरिति भावः । इति अस्माद्धेतोः । त्याज्ये भवे संसारे । भवतीति भव्यो योग्यो जनः । भव्यादय इति पाठः । 'भव्यं शुभे शुभे चापि भव्यं योग्यभाविनोः' इति विश्वः । 'भव्यगेय— इत्यादिना कर्त्तरि निपातः । मुक्तौ मोक्ष उत्तिष्ठते उद्युक्तो भवति । उदोऽनूर्ध्वकर्मणि इत्यात्मनेपदम् ॥ १३ ॥

जन्मधारण करनेवाले प्राणी सर्वदा विपत्तियों से दबे रहते हैं । अन्त में मृत्यु से अवश्य भागिनी है ( तात्पर्य यह कि पहिले तो प्राणी को जन्म जनित [redacted] दुःख भोगना पड़ता है फिर जीवन यात्रा अनेक आपत्तियों से पूर्ण है अन्त में मृत्यु के विषय में कहना ही क्या सबलोग जानते ही हैं ) इस लिये यह संसार हेय है जो सज्जन लोग हैं वे मुक्ति प्राप्ति के लिये सदा यत्नशील रहते हैं ॥ १३ ॥

संप्रति प्रशंसापूर्वकं स्वाभिसन्धिं दर्शयति—

> चित्तवानसि कल्याणी यस्य मतिरुपस्थिता ।
> विरुद्धः केवलं वेषः संदेहयति मे मनः ॥ १४ ॥

चित्तवानिति ॥ चित्तवान् प्रशस्तचित्तोऽसि । प्रशंसायां मतुप् । कुतः । यत् यस्य त्वां कल्याणी साध्वी । बह्वादिभ्यश्च इति ङीप् । मतिरुपस्थिता सङ्गता । किन्तु केवलमेकं यथा तथा विरुद्धो वेषो मे मनः संदेहयति संशययुक्तं करोति । यद्वा वेषः कवचम् । वेष एवैकम् । 'केवलं कृत्स्ने एके च केवलं चावधारिते' इत्युभयत्रापि शाश्वतः ॥ १४ ॥

तुम्हारा मन शुद्ध है जो तुममें इस तरह की मङ्गलमयी बुद्धि का विकास हुआ है। एक तुम्हारा विरुद्ध वेष ही मेरे मन को क्षुब्ध कर रहा है ॥ १४ ॥

वेषविरोधमेवाह—

युयुत्सुनेव कवचं किमामुक्तमिदं त्वया ।
तपस्विनो हि वसते केवलाजिनवल्कले ॥ १५ ॥

युयुत्सुनेति ॥ युयुत्सुनेव योद्धुमिच्छुनेव त्वया । युधेः सन्नन्तादुप्रत्ययः । किमिदं कवचं वर्म । आमुक्तमर्पितम् । तत्र को विरोध इत्यत्राह—हि यस्मात्, तपस्विनः केवले एके । कवचाद्यसहचरिते इति यावत् । ते च ते अजिनवल्कले च । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । वसते आच्छादयन्ति । अतस्तपस्विनस्ते कवचधारणं विरुद्धमित्यर्थः ॥ १५ ॥

विरुद्ध वेष क्या है —

युद्धार्थी की तरह यह कवच तुमने किस लिये धारण कर रक्खा है? तपस्वी तो केवल मृगचर्म और वल्कल धारण करते हैं ॥ १५ ॥

प्रपित्सोः किं च ते मुक्तिं निःस्पृहस्य कलेवरे ।
महेषुधी धनुर्भीमं भूतानामनभिद्रुहः ॥ १६ ॥

प्रपित्सोरिति ॥ किं च, मुक्तिं प्रपित्सोः प्राप्तुमिच्छोः । 'सनि मीमा—' इत्यादिनेत्वादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अतो मुमुक्षुत्वादेव कलेवरे शरीरे गतस्पृहस्य निःस्पृहस्य । अतो नात्मरक्षार्थं धनुर्धारणं युक्तमित्यर्थः । नापि परहिंसार्थमित्याह—भूतानां जन्तूनाम् । 'क्ष्मादौ जन्तौ च भूतानि' इति वैजयन्ती । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मसंज्ञाया 'कर्तृकर्मणोः कृति—' इति कर्तरि षष्ठी । अनभिद्रुहोऽहिंसकस्य । 'सत्सूद्विष—' इत्यादिना क्विप् । ते तव महेषुधी महानिषङ्गौ भीमं त्रासजनकं धनुश्च । न समर्थयते शममित्युत्तरेणान्वयः । समर्थयेते इति वचनविपरिणामः कार्यः ॥ १६ ॥

तुम मुक्ति के अभिलाषी हो शरीर के विषय में तुम्हें निस्पृह होना स्वाभाविक है ऐसी दशा में तुम्हें किसी प्राणी से द्रोह बुद्धि नहीं रखना चाहिये अतः यह महान् तूणीर (तरकस) और भीषण धनुष धारण करना तुम्हारी शान्ति का समर्थन नहीं करता ॥१६॥

भयंकरः प्राणभृतां मृत्योर्भुज इवापरः ।
असिस्तव तपःस्थस्य न समर्थयते शमम् ॥ १७ ॥

भयंकर इति ॥ तथा, मृत्योरपरो भुज इव प्राणभृतां प्राणिनां भयं करोतीति भयंकरः । 'मेघर्तिभयेषु कृञः' इति खच्प्रत्ययः । 'अरुर्द्विषद्—' इत्यादिना मुमागमः ।

भसि खड्गः । तपसि तिष्ठतीति तपस्वी । तपश्चरतीत्यर्थः । सुपि स्थ इति कप्रत्ययः । तस्य, तव शमं शान्तिं न समर्थयते न संभावयति । किं शान्तस्य शस्त्रेणेति भावः ॥ १७ ॥

यह कृपाण ( तलवार ) जो लोभधारियों के लिये मृत्यु की दूसरी भुजा के सदृश भयावह है धारण करते हो वह तपोनिष्ठ तुम्हारी शान्ति का समर्थन नहीं करता ( शान्त पुरुष को शस्त्र से क्या प्रयोजन ? ) ॥ १७ ॥

ननु शान्तस्य किं तपसैवास्तु इत्यशङ्क्य जयार्थमित्याह—

जयमत्र भवान्नूनमरातिष्वभिलाषुकः ।
क्रोधलक्ष्म क्षमावन्तः क्वायुधं क्व तपोधनाः ॥ १८ ॥

जयमिति ॥ अत्र भवान् । पूज्य इत्यर्थः । इतराभ्योऽपि दृश्यन्ते इति प्रथमार्थे प्राग्दिशीयस्त्रप्रत्ययः । सुप्सुपेति समासः । किन्तु तत्रभवान् पूज्यस्तथैवात्रभवानपि इति पाठः । अरातिषु शत्रुषु विषये जयमभिलाषुको जयमिच्छुः । 'लषपत इत्या विनोकञ्प्रत्ययः' । न लोक इत्यादिना षष्ठीप्रतिषेधः । नूनमिति निश्चये । नूनं तर्केऽपि निश्चये इत्यमरः । क्रोधस्य लक्ष्म कोपस्य चिह्नम् । आयुधं क्व । क्षमावन्तः शान्ताः तपोधनाः क्व । क्रोधशान्त्योर्विरोधात् तत्कार्ययोः शस्त्रतपसोरप्येकत्रासंगतेः शस्त्रिणस्ते तपो जयार्थं न तु मोक्षार्थमिति निश्चय इत्यर्थः ॥ १८ ॥

यह निश्चय हो रहा है कि तुम शत्रु से विजय प्राप्ति की अभिलाषा रखते हो ( मोक्ष की नहीं ) क्योंकि क्रोधसूचक शस्त्र कहाँ ? और क्षमाशील तपस्वी कहाँ । अर्थात् जो शत्रु को जीतने की इच्छा रखता है वही शस्त्र धारण करता है और जो मुमुक्षु हैं उन्हें तो क्षमा की ही भावना रहती है ॥ १८ ॥

तपसो जयार्थत्वे दोषमाह—

यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः ।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥ १९ ॥

य इति ॥ यः पुमान् । निश्चितं श्रेयो निःश्रेयसं मुक्तिः । अचतुर इत्यादिना समासान्तो निपातः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्' इत्यमरः । निःश्रेयसं कुर्वन्तीति निःश्रेयसकरीः । निःश्रेयसहेतूरित्यर्थः । कृञो हेतुताच्छील्यानुलोम्येषु इति हेत्वर्थे टप्रत्ययः । स्त्रियां ङीप् । क्रियास्तपोदानादिकर्माणि वधोदर्का हिंसाफलकाः करोति । 'उदर्कः फलमुत्तरम्' इत्यमरः । अत एव मूढः स पुमान् । ग्लानिरेव दोषस्तं छिन्दन्तीति ग्लानिदोषच्छिदः पिपासाहारिणीः । क्विप् । स्वच्छा निर्मला अपः पङ्कयति पङ्कवतीः करोति । 'तत्करोति तदाचष्टे' इति णिच् । णाविष्ठवत्प्रातिपदिकस्येति मतोर्लुक्

इति मतुपो लुक्। महाफलसाधनस्य तपसस्तुच्छफलैर्विनियोगः स्वच्छाम्बुनः पङ्कसकरवत् प्रेक्षावन्निर्गर्हित इत्यर्थः। अत्र 'यत्तपसो वधोदकीकरणं तन्निर्मलस्य पयसः पङ्कसकरीकरणम्' इति वाक्यार्थे वाक्यार्थान्तरसमारोपात् प्रतिबिम्बकरणाक्षेपादसम्भवद्वस्तुसम्बन्धाद्वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥ १९ ॥

जो पुरुष मोक्षसाधिका क्रिया को हिंसात्मक बनाता है वह मूर्ख तृषाशान्ति समर्थ पवित्र जल को गदला बना देता है ॥ १९ ॥

अन्यथार्थकामयोरपि मोक्षवत्पुरुषार्थत्वात्तपसस्तदर्थत्वे को दोषस्तत्राह—

मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ २० ॥

मूलमिति ॥ हिंसादेरिति तद्गुणसंविज्ञानो बहुव्रीहिः। 'आदि'शब्दात् अनृतस्तेयादीनां सङ्ग्रहः। दोषस्य अपगुणस्य मूलं कारणभूतौ। 'स्त्रीकामा धनकामाश्च किं न कुर्वन्ति पातकम्' इति भावः। अर्थकामौ मा स्म पुषो मोपचिनुष्व। 'स्मोत्तरे लङ् च' इति लङ्। 'पुषादि-' इत्यादिना च्लेरङादेशः। हि यस्मात्, तौ अर्थकामौ तत्त्वावबोधस्य तत्त्वज्ञानस्य। मोक्षसाधनस्येति शेषः। दुरुच्छेदौ दुर्वारौ उपप्लवौ हिंसादिप्रवर्तकत्वाद्बाधकौ। अतः पुरुषार्थपरिपन्थिभावेतौ न पुरुषार्थावित्यर्थः ॥२०॥

यहाँ कदाचित् यह कहा जा सकता है कि मोक्ष के लिये नहीं, अर्थ और काम के लिये तपस्या कर रहे हैं उसका उत्तर यह है —

हिंसादिक जो अपगुण हैं उनके ये अर्थ और काम जड़ हैं ( इन्हीं के कारण हिंसा होती है ) अतः इनकी पुष्टि नहीं करना चाहिये क्योंकि ये दोनों तत्त्वज्ञान के ऐसे लुटेरे हैं जिनको कोई उपाय नहीं है ॥ २० ॥

मुक्तिप्रतिबन्धकत्वादपुरुषार्थावर्थकामावित्युक्तम्, तत्रार्थस्य तु लौकिकनिन्दास्पदत्वादप्यपुरुषार्थत्वमिति पञ्चभिः प्रपञ्चयति—

अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ २१ ॥

अभिद्रोहेणेत्यादि ॥ भूतानामभिद्रोहेण हिंसया गत्वरीरस्थिराः श्रियः सम्पदोऽर्जयन् जनः। उदकमस्तीति उदन्वानुदधिः। 'उदन्वानुदधौ च' इति निपातनात्साधुः। सिन्धूनां नदीनामिव आपदां विपदां पात्रतां भाजनत्वम् एति ॥ २१ ॥

जो पुरुष प्राणि मात्र के साथ ईर्ष्या करके चञ्चल लक्ष्मी को एकत्रित करता है वह ठीक उसी तरह विपत्ति का भाजन बनता है जैसा कि समुद्र नदियों का ( आश्रय ) पात्र बनता है ॥ २१ ॥

इतोऽपि श्रियो हेया इत्याह—

नान्तरज्ञा श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ २४ ॥

नेति ॥ श्रियः सम्पदो जातु कदाचित् । अन्तरज्ञा नीचानीचविशेषाभिज्ञा न भवन्ति । अत एव, आसां श्रियां प्रियैर्न भूयते । न ताः कुत्राप्यनुरज्यन्तीत्यर्थः । अन्यत्र श्रीदोषो न पुरुषदोष इति चेत्तत्राह—मूढा अमी जना तासु अननुरक्तास्वपि श्रीषु आसक्ताः । स्त्रीष्विव श्रीष्वननुरक्तास्वनुरागः पुंसामेवायं दोष इत्यर्थः । किमर्थं तर्हि तास्वेव सर्वेषामासक्तिरित्यर्थान्तरं न्यस्यति—वामेति । जन्तवो वामशीला वक्रस्वभावा हि । स्वभावस्य दुर्वारत्वादिति भावः ॥ २४ ॥

सम्पत्ति कभी भी किसी प्रकार का भेदभाव ( ऊँच नीच का विचार ) नहीं रखती । इन सम्पत्तियों के लिये प्रिय कोई नहीं । क्योंकि मूर्ख प्राणी इनमें आसक्त होकर दुःशील हो जाते हैं ॥ २४ ॥

प्रस्तुतम्—'नान्तरज्ञाः श्रियः' ( श्लो० २४ ) इति, तदेव भङ्ग्यन्तरेणाह—

कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ॥ २५ ॥

क इति ॥ यत् सम्पदोऽशीलेषु दुःशीलेषु विषये चञ्चला अस्थिराः । न तिष्ठन्तीत्यनु- भूयते, यत चञ्चला इति अतः स्तुतिपदे स्तुतिविषये तत्र कोऽपवादः का निन्दा । किंतु क्षुद्राः सम्पदः साधुवृत्तानपि विक्षिपन्त्येव त्यजन्त्येव । तदेव तासां निन्दापदमित्यर्थः । तस्मादर्थो न पुरुषार्थ इति तद्भावार्थः ॥ २५ ॥

सम्पत्तियाँ दुःशील पुरुषों के विषय में चञ्चल रहती हैं यदि इन्हें चञ्चला कहें तो इसमें निन्दा की कौन-सी बात है, कारण यह कि वे चञ्चल तो हैं ही । निन्दा का पात्र अथात् वे नीच तब होती हैं जब कि अच्छे मनुष्यों को भी छोड़ देती हैं ॥ २५ ॥

ननु मार्थमहमर्थये, किंतु वीरधर्ममनुपाल्यम् वैरनिर्यातनमिच्छामीत्याशङ्क्य तदपि परपीडात्मकत्वाद्युक्तमिति श्लोकचतुष्टयेनाचष्टे—

कृतवानन्यदेहेषु कर्ता च विधुरं मनः ।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ २६ ॥

कृतवानिति ॥ तत्रास्मद्दृष्टान्तेनैव परपीडातो निवर्तितव्यमित्याशयेनाह—अप्रियै- रनिष्टवस्तुभिः संयोग इव प्रियैरिष्टवस्तुभिः सह विप्रयोगो विरहोऽन्यदेहेषु स्वस्यैव देहान्तरेषु । अतीतानागतेष्विति शेषः । मनो विधुरं दुःखितं कृतवान् कर्ता करिष्यति च । भविष्ये लुट् । तद्वर्तमाने चानुभूयत इति शेषः । इष्टनाशो दुःखहेतुरिति सर्वत्रापि त्रैकालिकसिद्धमिति श्लोकार्थः ॥ २६ ॥

आपत्साम्यतामेव व्यनक्ति—

या गम्याः सत्सहायानां यासु खेदो भयं यतः ।
तासां किं यन्न दुःखाय विपदामिव संपदाम् ॥ २२ ॥

या इति ॥ या संपदः सत्सहायानां विद्यमानसाधनानामेव पुंसां गम्या प्राप्याः । विपदोऽपि सत्सहायानामेव गम्याः । निस्तीर्या इत्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । यासु सतीषु खेदो रक्षणादिक्लेशः । विपत्सु स्वत एवेति विशेषः । यतो याभ्यः संपद्भ्यो भयम् । अनेकानर्थमूलत्वादिति भावः । विपद्भ्यस्तु स्वरूपत एवेति भावः । किं बहुना विपदामिव तासां संपदां संबन्धि यन्न किम् । अस्तीति शेषः । दुःखाय न भवति । सर्व दुःखावहमेवेति भावः । यदाहुः—'अर्थानामर्जने दुःखमर्जितानां च रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥' इति । अतो हेया इति भावः । अत्र 'यन्न दुःखाय' इत्युत्तरवाक्यस्य यच्छब्दसामर्थ्यात्तासां किमिति पूर्ववाक्ये तच्छब्दोपादानं नापेक्षते । तदेतत्काव्यप्रकाशे स्पष्टम् ॥ २२ ॥

वह ? विपत्ति का काम किस प्रकार करता है कवि विचार कर रहे हैं —

जिस तरह विपत्ति अच्छे सहायक सामग्रियों से टाली जा सकती है वसी तरह सम्पत्ति भी अच्छे साधनों के द्वारा प्राप्त की जा सकती है । विपत्तियों के आने से दुःख होता है और सम्पत्तियों की रक्षा करने में अनेकों कष्ट उठाने पड़ते हैं । सम्पत्तिशाली बनने पर प्राय पर खतरा बना रहता है और विपत्ति तो स्वयं भयोत्पादिका है । क्या इन में से कोई भी विपत्ति ऐसी है जो दुःख का कारण न हो ? ॥ २२ ॥

दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।
भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ २३ ॥

दुरासदानिति ॥ किंच दुरासदान् दुष्प्रापान् । विश्वासाज्जन्म यस्यास्तस्याः । पञ्चम्युत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिः । धृतेः संतोषस्य । उग्रानरीन् । धनिकस्य सर्वज्ञानास्वादसमर्थादिक्षयसुखप्रसक्तानित्यर्थः । भुज्यन्त इति भोगास्तान् भोगान् धनानि । अहेयान् अहिषु भवान् । दर्वितुर्विषकर्कशानात्ममस्त्यहेतून् । भोगान् फणानिव । 'भोगः सुखे धने चाहेः शरीरफणयोरपि' इत्युभयत्रापि विश्वः । अध्यास्य अधिष्ठाय । आपत् विपत् । न दुर्लभा । आशीविषफणमिव सेव्यमानमेव भोगिनं पुमांसं धनकाद्यापदोऽनुसंदधतीत्यर्थः ॥ २३ ॥

भोग विलासादि दुष्प्राप्य हैं । वे सन्तोष के जिसकी उत्पत्ति विश्वास के कारण होती है प्रबल शत्रु हैं और वे सर्प के फणों की तरह हैं अतः भोगी पुरुष विपत्ति से छुटकारा कभी नहीं पा सकते ॥ २३ ॥

इतोऽपि श्रियो हेया इत्याह—

नान्तरज्ञा श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ २४ ॥

नेति ॥ श्रियः सम्पदो जातु कदाचित् । अन्तरज्ञा नीचानीचविशेषाभिज्ञा न भवन्ति । अत एव, आसां श्रिया प्रियैर्न भूयते । न ता कुत्राप्यनुरज्यन्तीत्यर्थः । अन्वय श्रीदोषो न पुरुषदोष इति चेत्तत्राह—मूढा अमी जना तासु अननुरक्तास्वपि श्रीषु आसक्ता । स्त्रीष्विव श्रीष्वननुरक्तास्वनुराग पुंसामेवाय दोष इत्यर्थः । किमर्थं तर्हि तास्वेव सर्वेषामासक्तिरित्यर्थान्तर न्यस्यति—वामेति । जन्तवो वामशीला वक्रस्वभावा हि । स्वभावस्य दुर्वारत्वादिति भाव ॥ २४ ॥

सम्पत्ति कभी भी किसी प्रकार का भेदभाव ( ऊँच नीच का विचार ) नहीं रखती । इन सम्पत्तियों के लिये प्रिय कोई नहीं । क्योंकि मूर्ख प्राणी इनमें आसक्त होकर दुःशील हो जाते हैं ॥ २४ ॥

यदुक्तम्—'नान्तरज्ञा श्रिय' ( श्लो० २४ ) इति, तदेव प्रकारान्तरेणाह—

कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ॥ २५ ॥

क इति ॥ यत् सम्पदोऽशीलेषु दुःशीलेषु विषये चञ्चला अस्थिरा । न तद्विषयासु-पयसे, यत चञ्चला इति अस्त स्तुतिपदे स्तुतिविषये तत्र कोऽपवादः का निन्दा । किंतु क्षुद्रा सम्पद साधुवृत्तानपि विक्षिपन्त्येव जहत्येव । तदेव तासां निन्दापदमित्यर्थः । तस्मात्तासु न पुरुषार्थ इति तद्भावार्थ ॥ २५ ॥

सम्पत्तियाँ दुःशील पुरुषों के विषय में चञ्चल रहती हैं यदि इन्हें चञ्चला कहें तो इसमें निन्दा की कौन-सी बात है, कारण यह कि वे चञ्चल तो हैं ही । निन्दा का पात्र प्रधान ये नीच तब होती हैं जब कि भले मानुषों को भी छोड़ देती हैं ॥ २५ ॥

ननु नार्थमहमर्थये, किंतु वीरधर्ममनुपालयन् वैरनिर्यातनमिच्छामीत्याशङ्क्य तदपि परपीडात्मकत्वादयुक्तमिति श्लोकचतुष्टयेनाचष्टे—

कृतवानन्यदेहेषु कर्ता च विधुरं मनः ।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ २६ ॥

कृतवानिति ॥ तत्रात्मदृष्टान्तेनैव परपीडातो निवर्तितव्यमित्याशयेनाह—अप्रियै-रनिष्टवस्तुभि संयोग प्रियैरिष्टवस्तुभि सह विप्रयोगो विरहोऽन्यदेहेषु स्वस्यैव देहान्तरेषु । अतीतानागतेष्विति शेष । मनो विधुरं दुःखित कृतवान् कर्ता करिष्यति च । भविष्ये लुट् । वर्तमाने चानुभूयत इति शेष । इत्थमात्मो दुःखहेतुरिति सर्वत्रापि त्रैकालिकसिद्धमिति श्लोकार्थ ॥ २६ ॥

ऊपर के श्लोक में कहे हुये वाक्यों से यह सिद्ध हो जाता है कि 'मोक्ष जिस तरह पुरुषार्थ माना गया उसी तरह अर्थ भी पुरुषार्थ माना जाय' यह ठीक नहीं।

यदि अर्जुन यह कहें कि मैं अर्थकामी नहीं हूँ किन्तु वीरों का जो कर्तव्य है उसका पालन करते हुये शत्रु का नाश चाहता हूँ। यह भी दूसरों का पीड़ाप्रद ही है अतः अयुक्त है इसी की पुष्टि आगे के चार श्लोकों द्वारा की जावेगा।

जिस प्रकार अनिष्ट वस्तुओं का समागम शरीरान्तर में मन को कष्ट पहुँचाता रहता है और पहुँचेगा उसी प्रकार प्रिय वस्तु से वियुक्त होना भी देहान्तर में दुःखप्रद होता रहता है और होगा ॥ २६ ॥

सम्प्रतीष्टसमागमस्य सुखहेतुत्वमाह—

शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः ।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ २७ ॥

शून्यमिति ॥ प्रियसमागमे इष्टजनसंयोगे सति शून्यं रिक्तमपि आकीर्णतां सम्पूर्णताम् एति । व्यसनमपि प्रतीयत इत्यर्थः । व्यसनं विपदपि उत्सवैस्तुल्यम् । 'व्यसनं विपदि भ्रंशे' इत्यमरः । विप्रलम्भो वञ्चना । प्रतारणमिति यावत् । सोऽपि लाभाय । किं बहुना प्रियसंगमस्य सर्वावस्थास्वपि सुखमेवेत्यर्थः ॥ २७ ॥

अभीष्ट के समागम से न्यूनता भी पूर्ण हो जाती है दुःख ( विपत्तियाँ ) भी सुख के समान ही प्रतीत होता है। इष्ट के द्वारा की गई प्रतारणा ( धोखा ) भी लाभप्रद होती है। अधिक क्या कहें अभीष्ट सज्जन सभी अवस्थाओं में सुख का कारण होता है ॥ २७ ॥

पुनः प्रकारान्तरेण प्रियवियोगस्य दुःखहेतुत्वमाह—

तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः ।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ २८ ॥

तदेति ॥ तदा रम्याण्यपि अरम्याणि असन्तोषकराणि भवन्ति । किं बहुना प्रिया असवः प्राणा अपि शल्यम् । शल्यवदसह्या भवन्तीत्यर्थः । किञ्च तदा सबन्धुः सन्नपि एकाकी असहाय एव । 'एकाद्आकिनिच्चासहाये' इत्याकिनिच्प्रत्ययः । यदा इष्टेन रहितो भवति तदा सर्वमसह्यमिति ॥ २८ ॥

प्रिय के वियोगावस्था में मनोऽभिराम वस्तुएँ भी कुरूप प्रतीत होती हैं तथा तक प्यारे प्रियप्राण भी हृदय में कण्टक की तरह खटकते हैं। उस अवस्था में कुटुम्ब परिवार के रहते हुये भी ( वियोगी ) अपने को अकेला समझता है ॥ २ ॥

युक्तः प्रमाद्यसि हितादपेतः परितप्यसे ।
यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने ॥ २९ ॥

युक्त इति ॥ किंच, युक्तः, हितेनेति शेषः । हितेनेष्टेन युक्तः सन् । प्रमाद्यसि प्रकर्षेण माद्यसि हृष्यसि । हितादपेतः परितप्यसे परितप्तो भवसि । तपेर्दैवादिकात्कर्तरि लट् । सत्यमेव तत्र किंमत आह—यदीति । पीडा आत्मनः स्वस्य च नेष्टा यदि तर्हि भवता जने परस्मिन्नपि मा सञ्जि न सज्यताम् । सञ्जतेर्ण्यन्तात्कर्मणि लुङ् । आत्मदृष्टान्तेन परपीडातो निवर्तितव्यमित्यर्थः । पीडायाः परात्मनोः समत्वात् ॥ २९ ॥

यदि प्रिय के समागम से प्रसन्न होते हो तो उसके वियोग से अवश्य [illegible]खी होंगे ( यह प्राकृतिक नियम है ) यदि आप अपने को दुःख से बचाना चाहते हों तो किसी भी व्यक्ति के साथ आसक्त न हों (आसक्ति ही उसके अभाव में दुःख का कारण हो जाती है) ॥२९॥

अथ देहास्थैर्यमत्वा च परपीडा न कार्येत्याह—

जन्मिनोऽस्य स्थितिं विद्वाल्लक्ष्मीमिव चलाचलाम् ।
भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥ ३० ॥

जन्मिन इति ॥ अस्य जन्मिन उत्पत्तिधर्मिकस्य शरीरिणः । व्रीह्यादित्वादिनिः । स्थितिं लक्ष्मीमिव चलाचलां चञ्चलां जन्मिधर्मत्वादेव चञ्चलाम् । अनित्यामित्यर्थः । चलतेः पचाद्यच् । 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' इति द्वित्वं । अभ्यासस्यागागमश्च । विद्वान् । जानन्नित्यर्थः । 'विदेः शतुर्वसुः' इति वैकल्पिको वस्वादेशः । भवान् । न्यायादनपेतं न्याय्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । मा स्म वधीत् । मा नाशयेत्यर्थः । 'स्मोत्तरे लङ् च' इति लुङ् । 'लुङि च' इति हनो वधादेशः । 'शेषे प्रथमः' इति प्रथमपुरुषः । हि यस्मात्, साधवो न्यायाधाराः न्यायावलम्बाः । बहुव्रीहिस्तत्पुरुषो वा । न्यायत्यागे साधुत्वमेव न स्यादिति भावः । 'न्यायाचाराः' इति पाठे न्यायमाचरन्तीति तथोक्ताः । कर्मण्यण् ॥ ३० ॥

जिस प्रकार लक्ष्मी चञ्चला है ( स्थायी नहीं है ) उसी प्रकार शरीरी ( उत्पन्न होने वाले ) भी स्थायी नहीं हैं ( अनित्य हैं ) ( पता नहीं, कब रहा और कब नहीं रहा ) अतः आप भी न्याय के मर्दन पर कुठाराघात न करें क्योंकि सज्जन पुरुष सर्वदा 'न्याय-पथावलम्बी होते हैं ॥ ३० ॥

तर्हि किं मे कर्तव्यं तत्राह—

विजहीहि रणोत्साहं मा तपः साधु नीनशः ।
उच्छेदं जन्मनः कर्तुमेधि शान्तस्तपोधन ॥ ३१ ॥

एति प्राप्नोति। उपमालङ्कारोऽयम्—'प्रकृताप्रकृतयोरर्थसाधर्म्यात् श्लेषे शब्दमात्रसाधर्म्यम्' इति ॥ ३३ ॥

द्रव्योपार्जन में मनुष्यको पराधीन रहना पड़ता है। नीचवृत्ति का अवलम्बन करना पड़ता है, निर्लज्ज बनना पड़ता है, अजितेन्द्रिय होकर रहना पड़ता है। पुरुषों की ठीक बैल की दशा हो जाती है ॥ ३३ ॥

न केवलं हिंसादिदोषमूलत्वाद्विषया हेयत्वम्, किंतु अपारमार्थिकत्वादपीत्याह—

अस्वस्थया सुखसंवित्तिः स्मरणीयाधुनातनी ।
इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम् ॥ ३४ ॥

इति ॥ अधुना भवा अधुनातनी इदानींतनी। 'सायंचिर-' इत्यादिना ट्युप्रत्ययः। सुखसंवित्तिः सुखानुभव श्व परेऽहनि स्वया स्मरणीया। न त्वनुभवनीया। इति हेतो। काम्यन्त इति कामा विषयास्तान्। स्वप्नोपमान् स्वप्नतुल्यान्। मत्वाऽस्थिरत्वात्तत्तुच्छत्वं तदङ्गता तच्छेषत्वं कामपरतन्त्रता मा गा न गच्छ। 'इणो गा लुङि' इति गादेशः ॥ ३४ ॥

आज का सुखोपभोग दूसरे दिन के लिये केवल स्मरणीय रह जाता है अतः विषयोपभोगों को स्वप्न के तुल्य समझ कर अपने को उन ( विषयों ) का अङ्ग ( अवयव ) मत बनाओ ॥ ३४ ॥

अतो हेया कामा इत्याह—

अश्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥ ३५ ॥

अश्रद्धेया इति ॥ श्रद्धातुमर्हा श्रद्धेया विश्वसनीयास्तथा। विप्रलब्धारः प्रतारकाः। विश्वासघातका इत्यर्थः। तथा, प्रीणयन्तीति प्रियाः प्रीतिजनकाः। 'इगुपध—' इत्यादिना कप्रत्ययः। तथापि विप्रियकारिणो दुःखजननशीलाः। किंच, त्यजन्तोऽपि पुरुषं विहाय गच्छन्तोऽपि सुदुस्त्यजाः स्वयत्नेन त्यक्तुमशक्याः कामा विषयाः कष्टाः कुत्सिताः शत्रवो हि प्रसिद्धशत्रवः। वैधर्म्यादिति भावः। अत्र अश्रद्धेयत्वादीनां विप्रलम्भकत्वादीनां चैकत्र विरोधो विषयस्वाभाव्येन समाधीयत इति विरोधाभासोऽलङ्कारः। तेन च कामानां प्रसिद्धशत्रुवैधर्म्यं व्यतिरेकेण व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३५ ॥

और अन्य प्रकार के शत्रुओं का परित्याग करके कष्ट से छुटकारा मिल सकता है, परन्तु काम, क्रोधादिक शत्रुओं को देखिये कैसे विलक्षण हैं —

इन कामादि शत्रुओं को श्रद्धा की दृष्टि से देखा जाय तो भी ये ठगने में देर नहीं

दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः । अनुपस्कारं अध्याहारदोषरहितम् । विष्वग्गति कृत्स्नार्थप्रतिपादकम् । न तु साक्षेपार्थमेव पुनः निराकुलमसंकीर्णार्थम् ॥ ३८ ॥

समासों का प्राचुर्य रहने के कारण यह [वाक्य] ओजस्वी है। अर्थ युक्ता पूर्ण है। अधिक दोष से बचा हुआ है। इसके पद परस्पर साकाङ्क्ष हैं। न कि 'दश दाडिमानि षडपूपा' की तरह निराकाङ्क्ष हैं। अध्याहार दोष से भी मुक्त हैं। पूर्ण अर्थ के प्रतिपादक हैं। अर्थ भी इस का सङ्कुचित नहीं है ॥ ३८ ॥

न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥ ३९ ॥

न्यायेति ॥ पुनः, न्यायेन युक्त्या निर्णीतसारत्वान्निश्चितार्थत्वाद्धेतोः, आगमे शास्त्रे विषये निरपेक्षं स्वतन्त्रमिव । युक्तिबलादेव प्रतीयते । वस्तुतस्तु शास्त्रसिद्धार्थमेवेति 'इव'शब्दार्थः । किंच, अन्येषां प्रतिवादिनाम् । अप्रकम्प्यतयाऽनुमानादिभिरबाध्यत्वादप्रत्याख्येयतया आम्नायवचनोपमम् । वेदवाक्यतुल्यमित्यर्थः ॥ ३९ ॥

युक्तिपूर्वक इसका तत्त्व निर्णय कर दिया गया है। अतएव इससे शास्त्रप्रमाण की भी आवश्यकता नहीं। तर्क के द्वारा अखण्ड्य है इसलिये वेद वाक्य सदृश है ॥ ३९ ॥

अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसंपत्तेः शान्तं चित्तमृषेरिव ॥ ४० ॥

अलङ्घ्यत्वादिति ॥ अन्यैर्जनैरलङ्घ्यत्वात् अनुल्लङ्घनीयत्वात् । क्षुभितोदन्वदूर्जितं उद्वेलाम्भोधिगम्भीरम् । औदार्यादुचितविशेषत्वात् । श्लाघ्यविशेषणत्वाद्वा । तदुक्तं दण्डिना—'उत्कर्षवान्गुणः कश्चिदुक्ते यस्मिन्प्रतीयते । तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः । श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ॥' इति 'अग्राम्यार्थत्वात्' इति केचित् । अन्यत्र,-त्यागित्वादित्यर्थः । अर्थसंपत्तेः प्रयोजनसंपत्तेः । अन्यत्र,-अणिमादिसमृद्धेः । ऋषेर्मुनेश्चित्तमिव शान्तं सौम्यम् ॥ ४० ॥

इतर लोगों के लिये अनुल्लङ्घ्य है अतः उद्वेलित जलराशि [ समुद्र ] के समान है अर्थपंक्तियों से युक्त होने से ऋषि महर्षियों के चित्त की तरह शान्त है ॥ ४० ॥

इदमीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ४१ ॥

इदमिति ॥ इदमीदृग्गुणोपेतं यथोक्तगुणयुक्तम् । इदमुपपदाद्दृशेः क्विप् । 'इदंकिमोरीश्की' इतीशादेशः । लब्धे प्राप्तेऽवसरसाधने कालोपायौ येन तत् प्रियं प्रीतिकरं वाक्यं को वक्ता व्याकुर्यात् व्याहरेत् । यो वक्ता सोऽनीदृगाशयः ईदृग्विवक्षावान् न भवति । भवद्विधैरित्यर्थः । तस्यार्थस्य वक्तुमशक्यत्वादिति भावः ॥ ४१ ॥

यंथो दिवस स्फुटतारस्य व्यक्ततारकस्य नभस इव भाजन पात्र नास्मि । अनधिकारित्वादिति भाव । अत्राह्नो नभोमात्रसम्बन्धसमवेऽपि तारासम्बन्धासमवात्तद्विशिष्टनभ सम्बन्धविरोधाद्युक्त तारकितस्य नभसो न पात्रमहरिति ॥ ४४ ॥

हे तात ! यद्यपि आपका यह वचन कल्याणकारक है तथापि मैं इसका पात्र नहीं हूँ, क्योंकि नक्षत्रराशि विशोभित आकाश रात्रि के विपरीत [ दिन ] में न होता [ दिन में अधिक तारों का होना असम्भव है ] दिन में तारे भले ही हों परन्तु दृष्टिगोचर नहीं होते हैं ॥ ४४ ॥

कुतस्ते मोक्षोपदेशानधिकारित्वम् , किंच, ते तपस पौर्वापर्य कथ न जाने इत्या शङ्क्य तत्सर्वं स्वजात्यादिकथनपूर्वक निरूपयति—

क्षत्रियस्तनय पाण्डोरह पार्थो धनजय ।
स्थित भ्रातस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥ ४५ ॥

क्षत्रिय इति ॥ अह क्षत्रिय क्षत्रियकुले जात । तत्रापि महाकुले प्रसूत , वीरसुतानभिज्ञेत्याह—पाण्डोस्तनय इति । तत्रापि कौन्तेयोऽस्मि, न माद्रेय इत्याह—पार्थ इति । पृथा कुन्ती, तत्सुत पार्थ । 'तस्यापत्यम्' इत्यण् । अर्जुनोऽह महावीरश्चेत्याह—धनजय इति उत्तरकुरूनभिजित्य धनाहरणाद्धनजयोऽस्मीत्यर्थ । 'सञ्ज्ञि सुमागम' इत्युक्त प्राक् । धनजय इत्युक्ते शरीरस्थो वायु सर्पविशेषो वा स्यात्तदर्थं पार्थ , गान्धर्वोऽपि कश्चित्पृथासुतोऽस्ति तदर्थं पाण्डो सुत , नैमिषारण्ये पाण्डुर्विप्रस्तत्पत्नी पृथा नाम काचिद्ब्राह्मणी तत्पुत्रोऽपि स्यात्तदर्थं क्षत्रिय इति । अपैव चेत्किमर्थं तर्हि तपस्यसि, मोक्षार्थं वा किं न तपस्यसि, तत्राह—स्थित इति । दाय पैतृक धनमादद्त इति दायादा ज्ञातय । 'दायाद ज्ञातिपुत्रयो ' इति, 'विभक्तव्य पितृद्रव्य दायमाहुर्मनीषिण ' इति च विश्व । 'स्थास्नीश्वरत्वं'सूत्रेण सोपसर्गादपि दायादेति कमस्ययान्तो निपातनात्साधु । तै , भ्रातस्य राज्यान्निरस्तस्य । वैरिनिर्यातनार्थिन इत्यर्थ । ज्येष्ठस्य भ्रातुर्युधिष्ठिरस्य । 'वृद्ध'शब्दादिष्ठन्प्रत्यय । वृद्धस्य च ज्यादेश । शासने निदेशे स्थित । तदाज्ञया तपस्यामीत्यर्थ । अन्यथा मानहानि सौभ्रात्रभङ्गपूज्यपूजाव्यतिक्रमदोषश्च स्फुरतीति भाव । अत एव हिंसैकरसस्य रागद्वेषकषायितचेतस कुतो मे मोक्षाधिकार इति तात्पर्यार्थं । सार्थविशेषणत्वात्परिकरालकार ॥४५॥

मैं क्षत्रिय [illegible] । पाण्डु का पुत्र तथा पृथापुत्र हूँ । धनञ्जय मेरा नाम है । अपने दायादों के द्वारा निर्वासित हूँ । अपने ज्येष्ठ भ्राता [ युधिष्ठिर ] की आज्ञा पालन के लिये तय्यार रहता हूँ । जितने विशेषण यहाँ पर युक्त किये गये हैं सब साभिप्राय हैं । इन्द्र को पूर्वापर का ज्ञान कराने के लिये अर्जुन ने इस तरह का उत्तर दिया है । सर्वप्रथम अपनी जाति बतला कर अपना परिचय दे रहे हैं । इससे भी उनके उच्चकुल में जन्म लेने के प्रमाण में न्यूनता देखकर उन्होंने अपने पिता पाण्डु का नाम लिया । इतने पर अभी उत्तर

नेन पाण्डवाभिमदेनैतान् स्वनगरं नेष्यामीत्येवमूढ सत्यकारमिव । क्रियतेऽनेनेति कारः । करणे घञ् । सत्यस्य कारः सत्यंकारः सत्यापनम् । चिक्रीर्षितस्य कार्यस्या पलस्य विप्रतिस्थापनाय परहस्ते यद्दीयते स सत्यकारः । क्रियादौ सत्यदानार्थं प्रास्त्री-यमानो मूल्यैकदेशश्च । 'क्लीबे सत्यापनं सत्यकारः सत्याकृतिः स्त्रियाम्' इत्यमरः । 'कारे सत्यागदस्य' इति मुमागमः । तमिव सपत्नेषूपाधत्त निहितवान् । तेषां विना शकाले विपरीतबुद्धिमुत्पादितवानित्यर्थः ॥ ५० ॥

शत्रुओं के द्वारा वह लोगों के समक्ष पतिव्रता पाञ्चाली ( द्रौपदी ) के केश पकड़-कर आकृष्ट किये जाते समय मृत्यु ने यह निश्चय कर लिया कि इन्हें ( कौरवों को ) भी हम अपने नगर में घसीट ले जायेंगे ॥ ५० ॥

केशग्रहणकृता सभ्यैर्वा किं कृतं तदाह—

तामैक्षन्त क्षणं सभ्या दुःशासनपुरःसराम् ।
अभिसायार्कमावृत्तां छायामिव महातरोः ॥ ५१ ॥

तामिति ॥ दुःशासनः पुरःसरो यस्यास्तां तथोक्ताम् । दुःशासनेन सभां प्रत्या कृष्यमाणामित्यर्थः । अनुपसर्जनात् इति न ङीप् । तां कृष्णाम् । सभायां साधवः सभ्याः । सभाया यः इति यप्रत्ययः । अभिसायार्कं दिनान्तसूर्याभिमुखम् । स्थितस्येति शेषः । सायो नाशः दिनान्तयोः इति विश्वः । लक्षणेनाभिप्रती आभिमुख्ये इत्य व्ययीभावः । महातरोः संबन्धिनीम् आवृत्तां छायामिव तां कृष्णां क्षणमैक्षन्त । न चिरं द्रष्टुमुचितत्वात् । नापि किंचित्प्रतिविधानं तदाभासमप्रभयात् । ते सर्वमपेक्षां साचिव्यनापन्नामाश्रिता इत्यर्थः । अत्रानुकूल्यमात्रत्वात् कृष्णायाः आकर्षणं प्रति परा धीनत्वादाकृष्यमाणामीपम्यम् । तथापि तां न मुञ्चतीति दुःशासनस्य वर्ण नीयम् ॥ ५१ ॥

दुःशासन के द्वारा सभा में आकृष्यमाण द्रौपदी को सायंकाल के समय विशाल वृक्ष की मलिन छाया की तरह उन सभ्यों ( भीष्म, द्रोण प्रभृति ) ने क्षण मात्र देखा ॥ ५१ ॥

अथास्यास्तदाऽभिरूपतामवाप्यं वर्णयति—

अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः ।
अरुध्येतामितीवास्या नयने बाष्पवारिणा ॥ ५२ ॥

अयथार्थेति ॥ अयथार्था मिथ्याभूता क्रियारम्भाः पतिशब्दप्रवृत्तिनिमित्त भूतकर्मोद्योगा येषां तैः । सामर्थ्यरहितैरित्यर्थः । तव संबन्धिभिः । पान्ति रक्षन्तीति पतयो भर्तारः । पातेर्डतिः इत्यौणादिको डतिप्रत्ययः । तैः ईक्षितैरवेक्षितैः किम् । न किंचित्फलमस्तीत्यर्थः । इतीव इत्थं विचार्येवेत्युत्प्रेक्षा । बाष्पवारिणाऽस्याः कृष्णाया नयने अरुध्येतामावृते । रुधेः कर्मणि लङ् । अत्यन्तं रुरोदेत्यर्थः ॥ ५२ ॥

पति शब्द पा रक्षणे धातु से 'डति' प्रत्यय करके सिद्ध होता है इसलिये इसका अर्थ 'रक्षा करने वाला' होता है। "पति शब्द के अर्थ के अनुकूल कार्य्य न करनेवाले तुम्हारे इन पतियों के देखते रहने से क्या प्रयोजन ?" इस बातको सोचकर द्रौपदी के नेत्र अश्रुधाराओं से परिप्लुत हो गये थे अर्थात् द्रौपदीने यह सोचा कि ये पतिदेव लोग मेरी रक्षा करने में विवश होकर खड़े २ देख रहे हैं इससे क्या प्रयोजन ? ॥ ५२ ॥

ननु भवद्भिः किमर्थमसमर्थैरिवोपेक्षित तत्राह—

सोढवान्नो दशामन्त्यां ज्यायानेव गुणप्रियः ।
सुलभो हि द्विषा भङ्गो दुर्लभा सत्स्ववाच्यता ॥ ५३ ॥

सोढवानिति ॥ गुणाः प्रिया यस्य स गुणप्रियः प्रियगुणः । 'वा प्रियस्य' इति परनिपातः । ज्यायान् अग्रजो युधिष्ठिर एव । 'वृद्धस्य चे'ति 'ज्यादादीयसः' इत्याकारादेशः । नोऽस्माकम् । अन्ते भवाम्, अन्त्यां निकृष्टां दशामवस्थां सोढवान्, न तु वयम् । किन्तु तद्वशाः इति भावः । ननु सत्युपेक्षा महानर्थकारिणीत्याशङ्क्याह- सुलभ इति । द्विषा विद्विषा भङ्गः सुलभः । कालान्तरेऽपीति शेषः । सत्सु सज्जनेषु । अवाच्यता निन्द्यता दुर्लभा, न तु सत्युपेक्षा । हि प्रसिद्धौ । सत्युपेक्षातो लोकापवाद एव बलवान् । तस्योपशमस्य पुनरशक्तिविधेयत्वात्, स च समयोल्लङ्घने स्यादे-वेति भावः ॥ ५३ ॥

हम लोगों के ज्येष्ठ भ्राता ने ही जो गुण के पक्षपाती हैं हम लोगों की दुर्दशा को सह लिया । शत्रु का नाश करना कोई बड़ी बात नहीं किन्तु सज्जनविषयिणी निन्दा ( जुगुप्सा ) दुर्लभ है ॥ ५३ ॥

ननु शत्रुवधे राज्ञो नापवादः प्रत्युत कीर्तिरेवेत्याशङ्क्य, सत्य स एव समयोल्लङ्घनकलङ्कितकीर्त्यां महानिन्दानिदानमित्याशयेनाह—

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ५४ ॥

स्थितीति ॥ तोयराशीनां समुद्राणां तोयानि मनस्विनां मनांसि च स्थित्यति-क्रान्तेर्मर्यादोल्लङ्घनाद्भीरूणि, अत एव, आकुलितानि सक्षोभितान्यपि स्वच्छानि प्रकलुषाणि । न स्वरन्त इत्यर्थः । मनस्व्ययं युधिष्ठिर इति भावः । अत्र तोयानां सामान्यतो मनस्विनां चापकृतानामेव गुणतौल्यादौपम्यस्य गम्यतया तुल्ययोगिता-लङ्कारः । गुणश्चात्र भीरुत्वं स्वच्छता च ॥ ५४ ॥

जल की राशि ( समुद्र ) का जल और मनस्वियों का मर्यादा के उल्लङ्घन होने के भय से क्षुब्ध हो जाते ह तथापि कलुषित नहीं होते ( किन्तु स्वच्छ ही रह जाते हैं ) ॥ ५४ ॥

अमर्षः कर्ता प्रतीकारः प्रतिक्रियारूपं भुजालम्बं हस्तावलम्बनं न लम्भयेन्न धारये-यदि । हृदयेनेति शेषः । सत्यं जीवामि प्रतिविधित्सया । न तु निर्लज्जतयेति भावः ॥

मानी पुरुष मानहानि की अपेक्षा प्राण हानि को अच्छा समझता है परन्तु करे क्या ? शत्रु से तिरस्कृत होकर हम लोगों का हृदय शीघ्र ही खण्ड खण्ड हो जाता है ( इसमें कोई सन्देह नहीं ) परन्तु यदि क्रोध (अमर्ष) प्रतिकार स्वरूप होकर सहारा न देता तो ॥५७॥

ननु तवैव कोऽयमभिमानस्तत्राह—

अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।
अन्योन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम् ॥ ५८ ॥

अवधूयेति ॥ अरिभिरवधूय परिभूय हरिणैर्मृगैस्तुल्यवृत्तितां तुल्यजीवनत्वम् । वन्याहारतामित्यर्थः । नीताः प्रापिता वयम् । पञ्चापीति शेषः । अन्योन्यस्यापि जिह्रीमो लज्जामहे । सहवासिनां सहचारिणां किं पुनः । प्रागेव जिह्रीम इति किमु वक्तव्यमित्यर्थः । क्रियायोगे सम्बन्धसामान्ये षष्ठी । अत्र वयं पञ्चापि तुल्याभिमाना एव । इदं तु मदेकसाध्यं कर्मेति मुनिवासनान्मयानुष्ठीयत इति भावः ॥ ५८ ॥

शत्रुओं से तिरस्कृत होकर हम लोगों की दशा ठीक वन्य पशुओं की सी हो गई है हम लोग परस्पर पाँचों भाई एक दूसरे से लज्जित होते हैं यदि सहचर लगों ( मित्रों ) का सामना पड़ता है तो कहना ही क्या ? ( अर्थात् वन्य पशु पत्र पुष्प फलाहारादि से जीवन-यात्रा करते हैं हमलोग भी वही करते हैं ) ॥ ५८ ॥

ननु तर्हि तु लौकिकमिदानमस्तु शत्रुमान एव त्यज्यतामित्याशङ्क्य तत्त्यागे दोषमाह—

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ ५९ ॥

शक्तीति ॥ शक्तिवैकल्येनोत्साहादिशक्तिवैधुर्येणाऽवष्टम्भसामर्थ्यविरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च निःसारत्वात् दुर्बलत्वात् स्थिरांशरहितत्वाच्च । 'सारो बले स्थिरांशे च' इत्यमरः । लघीयसो गौरवहीनस्य । नीरसस्येत्यर्थः । मानहीनस्य जन्मिनो जन्तोः । मौढ्यादिस्थायिनि । तृणस्य च गतिरवस्था समा इति । मानहीनस्य तृणादपि निकृष्टत्वात्त्याज्यो मान इति भावः । श्लेषालङ्कारोऽयं तदनुप्राणितेयमुप-मेत्यनेकार्थदीपिकेति व्यज्यते ॥ ५९ ॥

इस दुर्दशा का कारण मान ही यदि हो तथापि हम लोग इसे नहीं छोड़ सकते क्योंकि —
मान का परित्याग करने पर उत्साहादि शक्तियों से शून्य तथा साररहित होने के कारण गौरवहीन पुरुष तृण का समान हो जाता है ॥ ५९ ॥

मानत्यागे दोषमुक्त्वा तत्सद्भावे धर्मिगुणमाह—

अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् ।
प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥ ६० ॥

गिरेरपि गरीयान् मानाधिक इति भावः । अत्रोपमानाद्भूधरादुपमेयस्य मानिनो धर्मान्तरसाम्येऽप्यलङ्घ्यत्वेनाधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ६३ ॥

घने घने जङ्गलों से प्रवृद्ध तथा अत्यन्त उन्नत पर्वत का भी उल्लङ्घन किया जा सकता है परन्तु अविलङ्घ्यता महान् पराक्रमशाली तथा मान से उन्नत पुरुषों का परित्याग नहीं करती ॥ ६३ ॥

गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ ६४ ॥

गुरूनिति ॥ ते नराः । वंश्यान् अन्वये भवान्, गुरून् कुर्वन्ति प्रथयन्ति । स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवदित्यर्थः । तैर्नरैः । वसूनि धनानि धरतीति वसुन्धरा । 'संज्ञायां भृतॄवृजि-' इत्यादिना खच्प्रत्यये 'खचि ह्रस्वः' इति ह्रस्वाऽनुमागमश्च । अन्वर्थाऽनुगतार्था । तेषां वसुभूतानां धारणादिति भावः । येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्जयन्ति । यशसो निष्कलङ्कत्वादिति भावः । तथा हि यशो नाममहत् एव वसुभवतीति तात्पर्यार्थः । ह्रीधातोर्ण्यन्ताल्लट् । 'अर्तिह्री-' इत्यादिना पुगागमः । अत्र ह्रेपणस्य सादृश्यपर्यवसानादुपमालङ्कारः ॥ ६४ ॥

जिन पुरुषों के विमल यश चन्द्रमण्डल को भी लज्जित करते हैं वे ही लोग अपने २ नाम से अपने वंश का विस्तार करते हैं और उन्हीं से यह वसुन्धरा ( पृथ्वी ) अन्वर्था है अर्थात् वसु का अर्थ है धन, और धरा का अर्थ है धारण करनेवाली। यदि पृथ्वी धन धारण करनेवाली हो तो अन्वर्था है अन्यथा नहीं ॥ ६४ ॥

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ ६५ ॥

उदाहरणमिति ॥ यैरमर्षः क्रोधः शुष्के नीरसे । अशनिरिव अरातिषु विषये पात्यते प्रक्षिप्यते । मनस्विनां मानिनां प्रथमेऽग्रेसरास्ते आशीःषु पुरुषैरेव भवितव्यमेवम्भूतासु । उदाहरणं निदर्शनम् । भवन्तीति शेषः । राजादिवदुपमानं भवन्तीत्यर्थः । अतो न त्याज्यो मान इति सदर्थः ॥ ६५ ॥

शुष्क तृणपुञ्ज पर वज्रपात के सदृश जो पुरुष अपने क्रोध को शत्रु पर प्रक्षिप्त करते हैं व ही मनस्वी पुरुष मानियों में अग्रगण्य हैं और 'मनुष्य मात्र को कैसा होना चाहिये' इसके उदाहरण भी वे ही हैं ॥ ६५ ॥

यदुक्तम्-'क्षमिद्रोहेण भूतानाम्' ( श्लो० २१ ) इत्यादि, तत्र सुयमेनोत्तरमाह—

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ॥ ६६ ॥

नेत्यादि ॥ उदन्वद्वीचिरिव चञ्चलं समुद्रतरङ्गवदस्थिरं सुखं कामं न प्रार्थये नेच्छामि । तथा, चञ्चलं अर्थं च न प्रार्थये । किंच अनित्यता विनाशिता सैव अशनि-

अलङ्घ्यमिति ॥ महीभृतां पर्वतानां सम्बन्धि वाक्यम्‌ श्लाघ्यमिकम्‌ । उच्चैस्त्वं तत्तद्‌लङ्घ्यमुद्दीपयोत्मेव । तर्कमित्येति यावत्‌ । महतां महात्मनां तुङ्गता मानोन्नत्यं ज्यायसीं प्रियतां प्रियत्वं केन हेतुना मागात्‌ । न केनापि प्रियत्वं गच्छत्येवेत्यर्थः । आशिषि माङि लुङ्‌ । अतोऽपवाद । दैवमभिलक्ष्य परोक्षानुपलब्धयत्वीपधवद्‌ सिमर्थे इत्याशंसनाप्यमाशोः प्रयोगः । उद्दीपयेत्समानकर्तृकत्वनिर्देशः कश्चित्प्रयोग दयनात्सोऽन्यः । केचित्‌ उद्दीपयत्‌ इति पठन्ति । तत्र पयदुस्थस्तादलङ्घ्यमुद्दी पयमयक्षोऽन्तीय न चोदृहृतीयमिति । अतो महतामित्यादि योजयन्ति ॥ ६ ॥

मान के परि याग में दोष तो है ही परन्तु मान के रहने में गुण भी बहुत [illegible] है—

उच्च होने ही के कारण पर्वत अलङ्घ्य है पर र उ हैं कोई उल्लंघन नहीं कर सकता तो फिर कौन सा ऐसा कारण है—जो मौन व बड़े लोगों के लिये प्रिय न होगा ! ॥६ ॥

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ६१ ॥

तावदिति ॥ किंच तावल्लक्ष्म्या आश्रीयते । तावदस्य पुंसो यशः स्थिरम्‌ । तावदेव असौ पुरुषः । पुरुषत्वेन गण्यत इत्यर्थः । यावत्‌ मानादभिमानात्‌ । न हीयते न भ्रश्यति । मानहीनस्य न किंचिद्‌गुणमस्तीत्यर्थः ॥ ६१ ॥

तभी तक पुरुष लक्ष्मी का आश्रय बना रहता है तभी तक उसका यश स्थिर रहता है और तभी तक वह पुरुष है जब तक मान का परित्याग नहीं करता ( जहाँ मान को छोड़ दिया कि गया ) ॥ ६१ ॥

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥ ६२ ॥

स इति ॥ स पुमान्‌, अर्थवज्जन्मा सार्थकजन्मा यस्य पुंसो नाम्नि पुरोऽग्रे स्थिते सति संख्यायां पुरुषगणनाप्रस्तावे उद्यता गुणमभिकुर्वोद्यमिताङ्गुलिरन्या द्वितीयाम्‌ अङ्गुलिम्‌ । उद्यतामिति शेषः । नाभ्येति न प्राप्नोति । अद्वितीयत्वादस्येत्यर्थः । धृतन्मानरहितस्य न सेयमस्तीति भावः ॥ ६२ ॥

उसी पुरुष का जन्म इस संसार में सफल है जिसका नाम गणना के समय में प्रथम अङ्गुलि पर ही आता है न कि दूसरी अङ्गुलि पर ॥ ६२ ॥

दुरासदवनज्यायान्‌ गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥ ६३ ॥

दुरासदेति ॥ दुरासदैर्वनैर्ज्यायान्‌ अधृष्यस्तथापि तुङ्गोऽपि भूधरो गम्यो गन्तुं शक्य एव । प्रसिद्ध चैतदिति भावः । महौजस्कं प्रतापसम्पन्नं मानप्रांशुं मानोन्नतम्‌ । पुरुषमिति शेषः । अलङ्घ्यता न जहाति । कदाचिन्मानी लङ्घयितुं न शक्यत इत्यर्थः ।

गिरेरपि गरीयान् मानाधिक इति भाव । अत्रोपमानाद्भूधरादुपमेयस्य मानिनो धर्मान्तरसाम्येऽप्यलङ्घ्यत्वेनाधिक्यकथनाद्व्यतिरेकालङ्कार ॥ ६३ ॥

घने घने जङ्गलों से प्रच्छन्न तथा अत्यन्त उन्नत पर्वत का भी उल्लङ्घन किया जा सकता है परन्तु अविलङ्घ्यता महान् पराक्रमशाली तथा मान से उन्नत पुरुषों का परित्याग नहीं करती ॥ ६३ ॥

गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ ६४ ॥

गुरूनिति ॥ ते नरा । वंश्यान् अन्वये भवान् । गुरून् कुर्वन्ति प्रथयन्ति । स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवदित्यर्थं । तैर्नरै । वसूनि धनानि धरतीति वसुन्धरा । 'संज्ञायां भृतॄवृजि-' इत्यादिना खच्प्रत्यये 'खचि ह्रस्व' इति ह्रस्वः- मुमागमश्च । अन्वर्थाऽनुगतार्था । तेषां वसुभूतत्वात् धारणादिति भाव । येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्जयन्ति । यशसो निष्कलङ्कत्वादिति भाव । इदृशा हि यशो मानमहत एव सम्भवतीति तात्पर्यार्थं । ह्रीधातोर्ण्यन्तात्लट् । 'अर्तिह्री-' इत्यादिना पुगागम । अत्र ह्रेपणस्य सादृश्यपर्यवसानादुपमालङ्कार ॥ ६४ ॥

जिन पुरुषों के विमल यश चन्द्रमण्डल को भी लज्जित करते हैं वे ही लोग अपने २ नाम से अपने वंश का विस्तार करते हैं और उन्हीं से यह वसुन्धरा ( पृथ्वी ) अन्वर्था है अर्थात् वसु का अर्थ है धन, और धरा का अर्थ है धारण करनेवाली । यदि पृथ्वी धन धारण करनेवाली हो तो अन्वर्था है अन्यथा नहीं ॥ ६४ ॥

उदाहरणमाशी पु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ ६५ ॥

उदाहरणमिति ॥ यैरमर्ष क्रोध शुष्के नीरसे । अशनिरिव अरातिषु विषये पात्यते प्रक्षिप्यते । मनस्विनां मानिनां प्रथमेऽग्रेसरास्ते आशी पु पुरुषैरेव भवितव्य- मेवरूपाश्च । उदाहरणं निदर्शनम् । भवन्तीति शेष । रामादिवदुपमानं भवन्ती- त्यर्थं । अतो न त्याज्यो मान इति सदर्थोऽयं ॥ ६५ ॥

शुष्क तृणपुञ्ज पर वज्रपात के सदृश जो पुरुष अपने क्रोध को शत्रु पर प्रक्षिप्त करते हैं वे ही मनस्वी पुरुष मानियों में अग्रगण्य हैं और 'मनुष्य मात्र को कैसा होना चाहिये' इसके उदाहरण भी वे ही हैं ॥ ६५ ॥

यदुक्तम्-'अभिद्रोहेण भूतानाम्' ( श्लो० २१ ) इत्यादि, तत्र शुश्रेनोत्तरमाह—

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ॥ ६६ ॥

नेत्यादि ॥ उदन्वद्वीचिरिव चञ्चलं समुद्रतरङ्गवदस्थिरं सुखं कामं न प्रार्थये नेच्छामि । तथा, चञ्चलं अर्थं च न प्रार्थये । किंच अनित्यता विनाशिता सैव अशनि-

स्तस्मात् प्रस्थन् विग्रपम् । वा आशा इत्या दिवा स्वमप्रत्यय । विविक्त निर्बाधं ब्रह्मणो वेधस आत्मन पदम इति पद स्थानमैक्यरूपं मुक्ति च न प्रार्थये । एतेन यदुक्तम् उच्छेदं जन्मन कर्तुम् ( श्लो २१ ) इत्यादि तत् समाहितम् ॥ ६६ ॥

आपने जो कहा था कि सुख की कामना या धन की लिप्सा से तपसाधन कर रहे हो यह ठीक नहीं मोक्ष के लिये प्रयत्न करो शीघ्र ही सफलता प्राप्त हो जायगी ये सब बातें कुछ नहीं—

न मैं सुख के लिये तपस्या कर रहा हूं न तो समुद्र की लहरियों के सदृश अस्थिर द्रव्य की कामना करता हूं और न तो म विनश्वरता रूप विद्युत्पात ही से डरता हूँ । अब मुझे मुक्ति की भी इच्छा नहीं है ॥ ६६ ॥

प्रमार्ष्टुं मयशः पङ्कमिच्छेयं छद्मना कृतम् ।
वैधव्यतापितारातिवनितालोचनाम्बुभिः ॥ ६७ ॥

प्रमार्ष्टुमिति ॥ किंतु, छद्मना कपटेन कृतम् । शत्रुभिरिति शेष । अयश एव पङ्कमिति रूपकालंकार । वैधव्येन तापिताभ्य दुःखीकृताभ्यामरातिवनितानां लोचनाम्बुभि प्रमार्ष्टुं क्षालयितुम् । इच्छेयमभिलषेयम् । इयिषात्योर्लिङि रूपम् । वैरनिर्यातनातिरिक्त न किंचिदिच्छामीत्यर्थ ॥ ६७ ॥

यदि इच्छा है तो एक यह है कि शत्रुओं के द्वारा किये गये कपट व्यवहार से जो हमलोगों को कलङ्क की कीचड़ लगी है वह विधवापन से सन्तप्त शत्रुरमणियों के लोचन-जल से धुल जाय ॥ ६७ ॥

एव तर्हि न करोति कथोक्तां ( श्लो १९ ) इत्याशुक्तदोष स्यादित्याशङ्काम् अङ्गीकृत्य स्वाभिमं दोषापेक्षि न्यायमाश्रित्य गुरुमेवोत्तरमाह—

अपहस्येऽथवा सद्भि प्रमादो वास्तु मे धियः ।
अस्थानविहितायास कामं जिह्नेतु वा भवान् ॥ ६८ ॥

अपहस्य इत्यादि ॥ अथवा सद्भि पण्डितै अपहस्ये । अपहसिष्य इत्यर्थ । वर्तमानसामीप्ये वर्तमानवद्वा इति इसतेर्भविष्यत्कर्मणि लट । भवन्तस्तु आन्तःपाठ । मे धिय प्रमादोऽनवधानता वाऽस्तु । भवान् अस्थानेऽयोग्यविषये विहित आयासो हितोपदेशप्रयासो येन स तथोक्त । विफलप्रयत्न सन्नित्यर्थ । कामं वा जिह्नेतु लज्जताम् ॥ ६८ ॥

चाहे सज्जन लोग मेरी निन्दा करें अथवा मेरी बुद्धि ही मन्द हो जाय अथवा अयोग्यपात्र में उपदेश देने का जो आपने प्रयत्न किया उसके विफल होने से आप लज्जित हों ॥ ६८ ॥

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥ ६९ ॥

मन्येति ॥ अहं तु विद्विषां शत्रूणां समुच्छेदेन विनाशेन करणेन वंशलक्ष्मीमनुद्धृत्यापुनरावृत्त्यं निर्वाणं मोक्षमपि जयश्रियोऽन्तरायं विघ्नं मन्ये । ननु पुरुषार्थमित्यर्थः । किमुतान्योऽस्सवादिकमिति भावः ॥ ६९ ॥

शत्रुओं का संहार करके वंश परम्परा की श्री का उद्धार किये बिना मैं मोक्ष को भी विजयलक्ष्मी की प्राप्ति में विघ्न ही समझता हूँ ॥ ६९ ॥

नन्वयं ते दुराग्रह इत्यत आह—

अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा ।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ ७० ॥

अजन्मेति ॥ पुरुषो यावत् अरिभिर्विलुप्तं स्वकं यश इषुभिर्नादत्ते । अरिवधेन न प्रत्याहरतीत्यर्थः । तावत् अजन्मा । अजातप्राय इत्यर्थः । जन्मवतो जनतान्तरमुपयुज्यत एवेत्यरुच्या पक्षान्तरमाह—गतासुर्वेति । मृततुल्य इत्यर्थः । मृतोऽपि मातुरुपयुक्तमित्यरुच्याह—तृणमेवेति । तृणतुल्य इत्यर्थः । अकिंचित्करस्तु नैकस्याप्युपयोगाज्जीवन्मृत इत्यर्थः । अतो नाहमाग्रहाद्ब्रवीमि, किं तु वीरधर्ममनुपालयामीति भावः ॥ ७० ॥

ये सब बातें मैं आग्रह से भी नहीं कहता क्योंकि —

शत्रुओं के द्वारा विलुप्त यश का जो पुरुष जब तक अपने बाणों के द्वारा उद्धार नहीं करता तब तक वह पुरुष अजन्मा है अर्थात् उसने संसार में जन्म ही नहीं लिया है, मृत प्राय है, तृण से भी गया बीता है ॥ ७० ॥

सर्वथा वैरनिर्यातनं कर्तव्यमित्युक्तम्, तदकरणे पुरुषगुणाभावदोषमाह—

अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति ।
पुरुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन ॥ ७१ ॥

अनिर्जयेति ॥ यस्यामर्षः क्रोधो द्विषतां शत्रूणाम् । अनिर्जयेन निर्जयं विनैव प्रशाम्यति । उपलक्षणे तृतीया । तस्मिन् पुरुषे पुरुषोक्तिः 'पुरुष' शब्दः कथम् । न कथंचिदित्यर्थः । प्रवर्तत इति शेषः । प्रवृत्तिनिमित्तस्य पुरुषकारस्याभावादिति भावः । हे तपोधन ! त्वं हि त्वमेव ब्रूहि कथय । न च ते किंचिदविदितमस्तीति भावः । 'हि हेताववधारणे' इत्यमरः ॥ ७१ ॥

'वैरियों से बदला अवश्य लेना चाहिये' ऐसा न करने से दोष होता है —

हे तपस्विन् ! भला आप ही बतलाइये, 'शत्रु से बदला चुकाये बिना जिसका क्रोध शान्त हो जाता है उसे पुरुष पद से कैसे पुकारा जा सकता है' ॥ ७१ ॥

ननु पुरुषत्वजात्यैव पुरुषोक्तिप्रवृत्तेः किं पुरुषकारेण, तत्राह—कृतमित्यादिद्वयेन—

कृतं पुरुषशब्देन जातिमात्रावलम्बिना ।
योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥ ७२ ॥

खण्डितेति ॥ खण्डिता त्यक्ता आशंसा जयाशा यस्मात्तया तेषां गणानां सवन्धिन्या तया । अतिसंनिकृष्टयेत्यर्थः । पराङ्मुखतया रणवैमुख्येन । पलायनेनेत्यर्थः । केतौ ध्वजे कृत आरोपित उच्चैर्महान् वानरो हनूमान् येन तं नरं पुरुषम् । कपिध्वजमित्यर्थः । कृपा करुणा । आविवेश । तदीयदुर्दशां दृष्ट्वा स कृपाविष्टोऽभूदित्यर्थः । यमकालंकारः ॥ ३ ॥

विजयकी आशा के प्रति निराश होकर उन प्रमथ गणों की संग्राम से पराङ्मुखता को देख कपिकेतन ( अर्जुन ) को दया ने आकृष्ट कर लिया ॥ ३ ॥

ननु शत्रुषु कथं करुणा तत्राह—

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ४ ॥

आस्थामिति ॥ आस्थां यत्नमालम्ब्य । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः । वशं नीतेषु क्षुद्रेषु तुच्छेषु अरातिषु शत्रुषु विषयेऽनुकम्पया कृपया महतां धीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटत्वम् । आयाति प्राप्नोति । स्वपौरुषनिर्जितेष्वरातिष्वपि करुणा भूषणमेव महतामिति भावः ॥ ४ ॥

यत्नों के आधार नीच शत्रुको आधीन कर लेने पर भी दया करने से महानुभावों की उदारता व्यक्त होती है ॥ ४ ॥

स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥ ५ ॥

( एकाक्षरपद्यम् । )

स सासिरिति ॥ सहासिना वर्तमानः सासिः ससङ्गः असून् सुवन्ति प्रेरयन्तीत्यसुसुवो बाणाः । 'षू प्रेरणे' इति धातोः 'सत्सूद्विष—' इत्यादिना क्विप् । असुसूभिः सह वर्तत इति सासुसूः सबाणः । अस्यन्ते क्षिप्यन्ते शरा अनेनेत्यासो धनुः । 'अकर्तरि च कारके संज्ञायाम्' इति घञ् । आसेन सह वर्तत इति सासः सचापः । सर्वत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । येयाः यातव्याः यानसाध्याः अयेयाः अयातव्याः यानं विनैव साध्याः । 'अचो यत्' इति यत्प्रत्ययः । येयाश्च अयेयाश्च येयायेयाः, तेषां ह्यानामायो स्वर्णगजादिलाभे आसि प्राप्नोतीति येयायेयायायः । अयः शुभावहदैवं यातीत्यययः । येयायेयायायश्चासौ अययश्चेति येयायेयाययाययः । याधातोरुभयत्रापि 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । ललो लडति विलसतीति ललः । 'लल विलासे' पचाद्यच् । अलोलोऽचपलः । शशिन ईशः शिवस्तस्य शिशुः स्कन्दस्तं शमादि हिनस्तीति शशीशशिशुशीः । क्विप् । शशन् प्लुतगतिं कुर्वन् । 'शश प्लुतगतौ' इति धातोः शतृप्रत्ययः । सोऽर्जुनो लीलां शोभां ललौ आप । 'ला आदाने' कर्तरि लिट् ॥ ५ ॥

वह्निर्मूर्गुह' इत्यमरः । ते गणाः प्रमथाख्यो जगदिरे उक्ताः । ओष्ठ्यवर्णाभावा-न्निरोष्ठ्यमेतत् ॥ ७ ॥

सेना को भागते हुए देख उसे रोक रखने के लिये तिरछे हो खड़े होकर शिवकुमार [ स्वामिकार्तिक ], जिनकी कीर्ति अविचल है, सेना के आगे मन्दहास करते हुए कुछ खिन्न होकर प्रथम गणों से बोले । इस श्लोक में ओष्ठ से उच्चारण होने वाले वर्ण एक भी नहीं आये हैं इस लिये इसे 'निरोष्ठ्य' रचना कहते हैं ॥ ७ ॥

अथैकविंशतिभिः श्लोकैः स्कन्दवाक्यमेवाह—

मा विहासिष्ट समरं समरन्तव्यसंयतः ।
क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः ॥ ८ ॥

( पादान्तादियमकम् )

मा विहासिष्टेत्यादि ॥ रन्तव्यं रमणं क्रीडा । बहुलग्रहणाद्भावे तव्यप्रत्ययः । संयुद्धम् । 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः । समे रन्तव्यसंयती येषां ते समरन्तव्यसंयतः तुल्यक्रीडासंगराः इति तेषां सम्बोधनम् । यूयं समरं संग्रामं मा विहासिष्ट न त्यजत । जहातेर्माङि लुङ् । सम्भ्रमपरिहुतवचनम् । क्षुण्णाः पराजिता असुरगणा यैस्तैः । भवद्भिरिति शेषः । अगणैरिव गणेभ्योऽन्यैरिव किं किमर्थं यशः क्षतं नाशितम् । गैरयुक्तं महाशूराणां भवादृशामित्यर्थः ॥ ८ ॥

[ अये प्रमथगणो ! आप लोगों के लिये खेल और युद्ध समान है क्योंकि आपलोगों ने राक्षसों के समूह को मर्दन करके छोड़ा है फिर गणों से इतर देवता, राक्षस तथा मनुष्यों की तरह संग्राम से विरत होकर आप लोग क्यों अपने यश को कलङ्कित करते हैं ? वीरों के लिये यह उचित नहीं है ॥ ८ ॥

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः ।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥

विवस्वदिति ॥ विवस्वदंशुसंश्लेषेण सूर्यकिरणसम्पर्केण द्विगुणीकृतानि उत्तेजितानि तेजांसि येषां ते तथोक्ताः मोघं व्यर्थं उद्गूर्णा उद्यताः । 'गुरी उद्यमने' इति धातोः कर्मणि क्तः । वो युष्माकम् । अमी महासयः खड्गा हसन्तीवेत्युत्प्रेक्षा । किं पलायमानानां खड्गैरिति हासः ॥ ९ ॥

ये बड़े बड़े खड्ग, [तलवार ], जो सूर्य की किरणों के सम्पर्क से द्विगुण प्रकाशित हो रहे हैं तथा व्यर्थ ही ऊपर को उठे हुये हैं, आप लोगों की दशा पर हँसते हुए की तरह मालूम पड़ रहे हैं ॥ ९ ॥

वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम् ।
बाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति ॥ १० ॥

विदु ॥' इति लक्षणात् । षोडशकोष्ठद्वयेऽधंद्वय क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धार ॥ १२ ॥

यह पुरुष दानव, नाग, पहाड़ और राक्षस इनमें से कोई भी नहीं है। महान् उत्साहशाली होने की आशङ्का हो तो यह भी नहीं है किन्तु भूमिचारी रजोगुणी मनुष्य है अत एव यह सरलतापूर्वक विजित किया जा सकता है ॥ १२ ॥

सन्दधत्यभिषुलता कृपया मुनिरेष व ।
प्रगुणत्यागतावज्ञ जघनेषु पशूनिव ॥ १३ ॥

सन्दधिति ॥ एष मुनिर्घृणया कृपया । इषु लता शाखामिव सन्दधत्यम् क्षिपन् वो युष्मान् पशूनिवागतावज्ञ यथा तथा जघनेषु प्रगुदति चोदयति । किमत पर कष्टमस्तीति भाव ॥ १३ ॥

यह तपस्वी कृपा करके हरी हरी शाखाओं के सदृश बाण प्रक्षिप्त करते हुए [ हरी हरी शाखा के खाने के लालच से समागत ] पशु की भाँति जघन प्रदेश में प्रहार करता है, इससे बढ़कर और कष्ट क्या हो सकता है ? ॥ १३ ॥

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥ १४ ॥

( एकाक्षर । )

नेति ॥ पदच्छेदस्तावत्—न ना ऊननुन्न नुन्नोन ना अना नानानना ननु । नुन्न अनुन्न ननुन्नेन ना अनेना नुन्ननुन्ननुत् ॥ अथ योजना—हे नानानना नानाप्रकाराण्याननानि येषा ते । नानाविधास्या इत्यर्थ । ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो य स ना न पुरुषो न । तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना ननु अपुरुष खलु । कश्चिद्देव एव अयमसौ किं पलायनीयमिति भाव । किन्च, नुन्न इव स्वामी यस्य [illegible] नुन्नेन । स [illegible] भवतीति ननुन्नेन । नञर्थस्य 'न'शब्दस्य सुप्सुपेति समास । स नुन्नो विद्धोऽपि अनुन्नोऽविद्ध एव । यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भाव । तथा नुन्ननुन्ननुदतिशयेन नुन्ना नुन्ननुन्नास्तान्नुदतीति नुन्ननुन्ननुत् । अतिपीडितपीडको ना पुरुषोऽनेना निर्दोषो न भवतीति, किंतु सदोष एवेति । 'नार्तं नातिपरिचतम्' इति निषेधादित्यर्थं । अत एव नैतादृश इति । न पलायितव्यमिति भाव । अयमेकाक्षरश्लोक । अन्त्यस्तकारस्तु न दोषावह, 'नान्त्यवर्णस्तु भेदक' इत्यभ्युपगमात् ॥ १४ ॥

हे नानानना ! =अनेकविध मुखधारी, ! ऊननुन्न =नीचविदार का, ना न =पुरुष नहीं है, नुन्नोन ना अना =न्यूनता का विघाती पुरुष अथवा पुरुषसे भिन्न कोई देवता है, ननुन्नेन = जिसका स्वामी विद्ध न हो, वह नुन्न =(यद्यपि) विद्ध किया

इस पद्य के उत्तरार्द्ध के सम्पूर्ण पद पूर्वार्द्ध की भांति हैं अर्थात् पूरे छन्द में एक एक पद दो दो बार आये हुए हैं।

योजनाक्रम—स्यन्दना =स्यन्दन्ते इति स्यन्दना अर्थात् वेगवान्, स्यन्दना =रथ, चतुरगा =चतुर (अच्छी चाल से) (गा=चलने वाले) तुरगा =घोड़े, सुरेभा = सुन्दर बृंहण वाले, सुरेभा =ऐरावत, अविपत्तय =विपत्ति से हीन, विपत्तय =विशिष्ट पैदल सिपाही।

इस पुरुष के पास वेगशाली रथ, अच्छी चाल का घोड़ा, सुन्दर गर्जनकारी ऐरावत हाथी तथा सुसज्जित पैदल सिपाही इन सब में से एक भी नहीं है ॥ १६ ॥

भवद्भिरधुनारातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥ १७ ॥

भवद्भिरिति ॥ अधुनाऽरातिभिः परिहापितानि त्याजितानि पौरुषाणि येषां तैः। अर्कनिष्पीतैरर्केण सशोषितैर्ह्रदैरिव। दुरुत्तरो दुस्तरः पङ्क इव पङ्को दुष्कीर्तिरूपः प्राप्तः ॥ १७ ॥

आप लोगों का पुरुषार्थ इस समय शत्रु के द्वारा भगा दिया गया है जिसके कारण आप लोग घर्म भगवान् की किरणों के द्वारा सुखाये हुए जलाशय (तालाब) की तरह हो गये हैं। और एक दुस्तर कर्दम में फँस गये हैं। अर्थात् अयश के पात्र बन रहे हैं ॥ १७ ॥

वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।
यात किं विदिशो जेतुं तुजेशो दिवि किंतया ॥ १८ ॥

(प्रतिलोमानुलोमपादः ।)

वेत्रेति ॥ वेत्राणि वंशाः फलिन्यो वा शाकाः सर्जतरवश्च कुजा वृक्षा यस्मिंस्तस्मिन् वेत्रशाककुजे। शत्रुणा दुष्प्रवेश इत्यर्थः। 'वेत्र वंशफलिन्योश्च' इति विश्वः। 'शाकः सर्जतरवश्च' इत्यमरः। लेशेन स्तोकेनाप्येजते कम्पत इति लेशैजः। स न भवतीति अलेशैजस्तस्मिन्। अत्यन्ताकम्पन इत्यर्थः। 'एजृ कम्पने'। पचाद्यच्। न कोकते नाद्रियत इत्यकुकः ग्रहणासमर्थः शात्रवो यस्मिंस्तस्मिन् अकुकशात्रवे। 'कुक आदाने'। पचाद्यच्। शैले पर्वते। केया भाव किंता कुत्सितता तयोपलक्षिताः सन्तः। 'कुत्सा-प्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः। विदिशो जेतुं यात गच्छत किम्। याते सप्तमे लोट्। मध्यमपुरुषबहुवचनम्। दिवि स्वर्गेऽपि। तुजेशा इति तेषां सम्बोधनम्। तुजन्त इति तुजा हिंसका दैत्याः। 'तुजि हिंसायाम्' पचाद्यच्। तेभ्यो दैत्येभ्य ईशत इति तुजेशाः। ईशो क्विप्। तेभ्योऽपि शक्ता इत्यर्थः। स्वर्गेऽप्यसुर-विजयिना युष्माकमत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनमनुचितमिति भावः ॥ १८ ॥

बास, फलशाली वृक्ष और भी अनेक प्रकार के व्यर्थ के वृक्षों से भरे हुए, रेणु मात्र भी उस से मस न करने वाले पहाड़ पर जहाँ शत्रु कुछ कर नहीं सकता, क्या

कावाद् ईषद्वादो वाक्कद् । 'ईषदर्थे' इति 'कु'शब्दस्य कादेशः । तद्वति कावादे । अर्शआदिभ्योऽच् । वाहिका पर्यायेण रणमारोढुमुत्कम् । वहे पर्याये धात्वर्थनिर्देशे ण्वुल्प्रत्ययः । वाहिकया क्रमप्राप्तरणक्रियया सुष्ठु शोभनं यथा तथाऽस्वकान् परानाजिहीतेऽभियुङ्क्ते । योत्स्यतीति यावत् । वाहिकास्वस्वकाह्वास्तस्मिन् । योद्धृधर्मो युद्ध उपचर्यते । 'ओहाङ् गतौ' इति धातोर्क्विप्प्रत्ययः । 'सोमपा'शब्दवत्प्रक्रिया । 'वा' शब्दश्चार्थे ॥ क मदोदकमाकिरन्तीति काकारा मदस्राविणः । किरतेराङ्पूर्वात्क र्मण्यण् । एवंविधा इभभरा गजघटा यत्र तस्मिन् काकारेभभरे । काका इव काका गर्ह्या इति लक्षणया तेषामामन्त्रणम् । निस्वा निरुत्साहा भव्याः सोत्साहास्ताः उभयानप्ययं भिया सम्भवन्तीति भिस्वभव्यव्या 'व्येञ् संवरणे' । 'आतोऽनुपसर्गे कः' । सैवंभस्ति भासत इति भिस्वभव्यव्यमस्वास्तस्मिन् । अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । सर्वतो भ्रमणात्सर्वतोभद्राख्योऽयं चित्रबन्धः । यथाह दण्डी–'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु–चतुष्कोष्ठे चतुरश्रबन्धक्रमेणायपङ्क्तिचतुष्टये पादचतुष्टयं विलिख्यमानमन्तरपङ्क्तिचतुष्टयेऽप्यथ क्रमेण पादचतुष्टयलेखने अथ माद्यु चतसृषु पङ्क्तिषु प्रथमं पादः सर्वतो वाच्यते, द्वितीयादिषु द्वितीय इत्यादि ॥

रणस्थल देवताओं को भी प्रोत्साहित कर देता है। इसमें वाक्कलह बहुत थोड़ा बीच होता है। दूसरे लोग भी की छोड़ कर इसमें कार्य करते हैं। मदस्रावी हाथियों की कतारें समास्थल व्याप्त रहता है। इसमें उत्साही निरुत्साही दोनों प्रकार के लोगों को भी काल से डरना पड़ता है। (वस्तुत यह श्लोक अस्पष्ट क्लिष्ट है मल्लिनाथी टीका से सहायता लीजिये।) ॥ २५ ॥

भ्रनृत्तशवनित्रस्ततुरगाक्षिप्तसारथौ ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि ॥ २६ ॥

भ्रनृत्तेति ॥ भ्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैस्तुरगैराक्षिप्ता अवधूताः सारथयो यत्र तस्मिन् । तथा मारुतेनापूर्णैर्व्याप्तैस्तूणीरैर्निषङ्गैर्विक्रुष्टाः शब्दायमाना हताः स्ताडिताः सादिनस्तौरङ्गिका यत्र तस्मिन् । पाठान्तरे मारुतापूर्णतूणीरैर्विक्रुष्टा आकर्षिता अतएव हता मारिताः सादिनोऽश्ववारा यत्र तस्मिन् ॥ २६ ॥

रणक्षेत्र में वीरों के शिर विच्छिन्न होने से धड़ तड़ फड़ाने लगते हैं जिसे देखकर घोड़े भयभीत होकर सवारों को फेंक देते हैं और वे उसी युद्धस्थल में पड़े हुए रहते हैं। रणभूमि में पड़े हुए वीरों के निषङ्ग पवन हवा से पूर्ण हो जाते हैं तो उससे ध्वनि निकलती है उस ध्वनि से आकृष्ट होने पर आहत अश्वारोही भी वहीं पड़े हुए रहते हैं ॥ २६ ॥

ससस्वरतिदे नित्यं सदरामर्षनाशिनि ।
त्वराधिककसन्नादे रमकत्वमकर्षति ॥ २७ ॥

(अर्धभ्रमक ।)

दृवेर्युधेसा । आशा दिशो ध्वनयत् शब्दयुक्ताः कुर्वन् दध्वान शब्दमकरोत् । दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ताः इत्यमरः ॥ ३४ ॥

शङ्कर के अर्जुन पर बाणप्रक्षेप करने पर नगराज ( अर्जुन ) की टङ्कार से पूर्व इन्द्रकील पर्वत ने मानो विदीर्ण होते हुए सम्पूर्ण दिशाओं को प्रतिध्वनित करते हुए शब्द किया ॥ ३४ ॥

तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः ।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥ ३५ ॥
( द्विपादयमकम् । )

तदिति ॥ भीमं तयोर्हरपाण्डवयोः । तत् प्रसिद्धं युद्धं गणाः प्रमथाश्चित्रसंस्थाः भिन्नाकाराः अचलाः शैला इव । तथापि चित्र आलेख्ये संस्था स्थितिर्येषां ते चित्रसंस्थाः चित्रलिखिता इव अचलाः आश्चर्यरसाविष्टाः सन्तो विस्मयेन ददृशुः ॥ ३५ ॥

प्रमथ गण जो चित्राकार पहाड़ के सदृश थे अर्जुन और शङ्कर के भीषण युद्ध को चित्रलिखित के तरह निश्चल होकर आश्चर्य पूर्वक देखने लगे ॥ ३५ ॥

परिमोहयमाणेन शिक्षालाघवलीलया ।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना ॥ ३६ ॥

परीति ॥ शिक्षालाघवलीलया अभ्यासपाटवातिशयेन हेतुना परिमोहयमाणेन व्यामोहयता । अणावकर्मकाच्चित्तवत्कर्तृकात् इति परस्मैपदे प्राप्ते न पादम्याङ्यम इत्यादिना तत्प्रतिषेधादात्मनेपदं प्राप्तम् । भीस्म्योर्हेतुभये इति हस्वस्य नत्वं वा पात्वम् । पिनाकिना हरेण जिष्णोरर्जुनस्येयं जैष्णवी विशिखश्रेणी बाणसमाधिः परिजह्रे निरस्ता ॥ ३६ ॥

अभ्यासनैपुण्य की अतिशयिता के कारण मन्त्रमोहित करते हुए शङ्कर भगवान् ने अर्जुन के बाणराशि ( शर समूह ) को काट डाला ॥ ३६ ॥

अवद्यन्पत्रिणः शंभोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥ ३७ ॥
( आद्यन्तयमकम् । )

अवद्यन्निति ॥ पाण्डवोऽर्जुनः । अवसायकैरवसानकरैः । ण्यन्तादन्तकर्मण्युण्प्रत्ययः । सायकैर्बाणैः शंभोः पत्रिणः शरान् । अवद्यन् खण्डयन् । षोऽन्तकर्मणि इति धातोः शतृप्रत्ययः । ओत श्यनि इत्योकारलोपः । शिक्षया लब्धु शक्तिमिच्छया । उत्साहेनेत्यर्थः । रणे शिक्षयाऽभ्यासेन च परिचक्राम । उत्साहनैपुण्याभ्यां चचारेत्यर्थः ॥ ३७ ॥

अर्जुन अन्तकारी बाणों से शङ्कर भगवान् के बाणों को खण्डित करते हुए उत्साह और रणचातुरी से समरक्षेत्र में घूमने लगे ॥ ३७ ॥

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः ।
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥ ३८ ॥
( द्व्यक्षरः । )

चारैरिति ॥ चारैर्गतिविशेषैर्वित्त इति चारचुञ्चु । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्ययः । चिरमारेचयति रिक्तीकरोति शत्रूनिति चिररेची । चञ्चलत्चलतश्चीरस्य वल्कलस्य रुचा प्रभया । रोचत इति रुच्यः शोभमानः । 'इगुपध-' इति कः । रुचिरः । सुन्दरः । चर्य्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात्पचाद्यच् । 'चरफलोश्च' इति नुमागमः । 'यङोऽचि च' इति यङो लुक् । आचारस्य युद्धव्यवहारस्य चञ्चुरो भृशमाचरिता स मुनिश्चारु यथा तथा चारैश्चक्रादिबन्धैर्गतिविशेषैः । चचार । 'चारः प्रियालवृक्षे स्याद्गतौ बन्धापसर्पयोः' इति विश्वः ॥ ३८ ॥

चारचुञ्चु अर्थात् गति विशेष से युक्त, चिररेची अर्थात् अधिक समय में शत्रुको रिक्त करने वाले, चञ्चलचीररुचारुच अर्थात् फहराते हुए भूर्जपत्र की कान्ति से शोभित होते हुए, चारु अर्थात् सुन्दर आचारचञ्चुर अर्थात् युद्ध के पूरे अभ्यासी अर्जुन चक्रबन्धादि अनेक रणकालिकी गति से समराङ्गण में परिभ्रमण करने लगे ॥ ३८ ॥

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥

स्फुरदिति ॥ स मुनिरर्जुनः स्फुरन्ती पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत्स्फुरत्पिशङ्गमौर्वीकम् । 'नद्युतश्च' इति कप्प्रत्ययः । बृहद्धनुर्गाण्डीवं धुनानः कम्पयन् । धृत उल्कानलः-स्तेन युतो योगो येन तेन । अंशुमताऽर्केण सूर्येण तुल्यं बभौ । उपमा । ३९ ॥

अर्जुन उस बृहत् ( विशाल ) गाण्डीव धनुष को—जिसकी प्रत्यञ्चा कपिश वर्णा की थी—कम्पित करते हुए उल्का रूप अग्नि से संयुक्त सूर्य के समान सुशोभित होने लगे ॥३९॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारब्धाः सावित्रीमंशुसंहतिम् ॥ ४० ॥

पार्थेन । पार्थबाणा अर्जुनशराः पशुपतेर्विशिखावलीं शरसंघातम् । सवितुरियं सावित्री ताम् । अंशुसंहतिं किरणसमूहम् । आरब्धा निबिडाः पयोमुचो मेघा इव । आवव्रुस्तिरोदधुः ॥ ४० ॥

अर्जुन के बाण ने चन्द्रशेखर ( शंकर ) प्रेरित शर संहति को इस प्रकार आच्छादित कर लिया जिस प्रकार सूर्य के किरणपुञ्जों को घने घने बादल आच्छादित कर लेते हैं ॥४०॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥ ४१ ॥

शरेति ॥ त्रिलोचनः शिवः । सव्येन सचते समवैतीति तेन सव्यसाचिनाऽर्जुनेन । उदस्तां क्षिप्तामुर्वीं महतीं शरवृष्टिं मार्गणैः शरैर्विधूय निरस्य तपनस्य रवेर्मार्गं रुरोधावृणोत् ॥ ४१ ॥

शंकर भगवान ने पार्थ के द्वारा प्रक्षिप्त प्रचुर शर वर्षा को निरस्त कर के अपने शरों से सूर्य भगवान् के मार्ग को अवरुद्ध कर दिया ॥ ४१ ॥

जगतीशरणे युक्तो हरिकान्तः सुधासितः ।
दानवर्षी कृताशंसो नागराज इवाबभौ ॥ ४५ ॥

( अर्थत्रयवाची )

जगतीति ॥ अर्थत्रयवाची श्लोकोऽयम् । तत्रादौ नगराज इति पदच्छेदमाश्रित्य प्रथमोऽर्थोऽभिधीयते-(१) ईशस्य रणे युक्त सक्तः । अन्यत्र,-जगतीशरणे भूरक्षणे युक्तः स्थितः । विधिनेति शेषः । हरिः सिंह इव कान्तो मनोहरः । अन्यत्र,-हरिणा सिंहाना कान्तः आवासदानात्प्रियः । सुधां दधाति धारयति श्रवा इति सुधा । क्विबन्तः । असितः कृष्णवर्णः । ततो विशेषणसमासः । अन्यत्र,-सुधालेपद्रव्यविशेषस्तद्वत् सितो धवलः । दानवर्षी बहुप्रदः कृताशंसः कृतजयाभिलाषः । अन्यत्र, दानवैर्देवैर्स्त्रैर्गिभिः इना कामेन च कृताशंसः नानाफलाभिलाषो यस्मिन्स ना नरोऽर्जुनः । नगराजो हिमवानिव आत्मानमाविष्येकोऽर्थः ॥ (२) ॥ अथ ऐरावतसाम्यमुच्यते—जगतीं युध रयन्ति तन्कुर्वन्तीति ते जगतीशा राक्षसास्तेषां रणस्तत्र युक्तो विहितसमर्थः । हरिकान्त इन्द्रप्रियः । उभयत्रापि समासमेतत् । सुधासितोऽमृतवत् स्वच्छः । पुष्कल,-शीतल, अन्यत्र,-वर्णत इति विवेकः । दानवर्षी मदमदो मदस्रावी च । कृताशंस उभयत्र कृतजिगीषः । पार्थो नगराज इव ऐरावत इव । आबभाविति द्वितीयोऽर्थः ॥ (३) ॥ अथ दीप्तीपरमुच्यते—जगतीशरणे भूरक्षणे युक्तो नियुक्तः । दैवेनेति शेषः । 'शरणं गृहरक्षित्रोः' इत्यमरः । हरिकान्तः कृष्णप्रियः । उभयत्रापि तुल्यम् । सुधां दधातीति सुधा । वसुधेति केचित् । एकदेशग्रहणात् समुदायग्रहणम् । तत्र सितो बद्धः । 'षिञ् बन्धने' कः । अन्यत्र,-सुधयाऽमृतेन सितो बद्धः । अमृतमिव इत्यर्थः । दानवाश्च नाऽपमश्च (इन्द्रोक्तीश शम्भि) तैः कृताशंसो विहितप्रयासः । उभयमपि तुल्यमेतत् । सोऽर्जुनो नागराज शेष इवाबभाविति तृतीयोऽर्थः ॥ ४५ ॥

इस श्लोक में तीन प्रकार के अर्थ भासित होते हैं । उनका क्रमशः उल्लेख किया जाता है —

( १ ) नगराजपक्षीया शोभना—जगतीशरणे युक्त हरिकान्त सुधासित दानवर्षी कृताशंस ना नगराज इव आबभौ ॥

जगति=इस संसार में ईशरणे=शंकर भगवान् के रण में युक्त=समर्थ हरिकान्त= सिंह के सदृश मनोहर सुधासित=श्रवा का धारक कृष्ण वर्ण दानवर्षी=प्रचुर परिमाण में दान के दाता कृताशंस=जय की अभिलाषा रखते हुये नरपुरुष ( अर्जुन ) इन्हीं सब विशेषणों से युक्त नगराज=शैलों के राजा हिमालय की तरह, जो जगतीशरणे युक्त = पृथ्वी की रक्षा करने के लिये ब्रह्मा के द्वारा निर्मित ( पहाड़ों के कारण पृथ्वी जगह जगह से रुकी [illegible] है ऐसा विद्वानों का सिद्धान्त है ), सिंहों को आवासस्थान प्रदान करने से प्रिय है, सुधा एक तरह का लेपद्रव्य (चूना) है उसके समान धवल वर्ण है, अनेक प्रकारके रत्नों

तेन व्यातेनिरे भीमा भीमार्जनफलाननाः ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥ ४२ ॥

( भङ्गयमकम् )

तेनेति ॥ तेन शिवेन भीमा भयङ्करास्तथा भियो भयस्य अर्जनं निरासस्तदेव फलं प्रयोजनं येषां तान्याननान्यग्राणि येषां ते भीमार्जनफलाननाः । तथा शिखाधरा मयूरास्तेषु जातानि शिखाधरजानि बर्हाणि तानि वासांसीव वासांसि पक्षा येषां ते शिखाधरजवाससो मयूरपक्षिण इत्यर्थः । विशिखा बाणाः अनुकम्प्य कृपां कृत्वा न व्यातेनिरे इति न । किं त्वननुकम्प्यैवेत्यर्थः । अननुकम्प्यैव व्यातेनिरे इति भावः । सम्भाव्यनिषेधने द्वौ प्रतिषेधाविति युक्तम् ॥ ४२ ॥

शङ्कर भगवान् के द्वारा भयजनक बाण जिनके अग्रभाग भय के दूर करने में सफल थे तथा शिखी ( मयूर ) से उत्पन्न बर्ह ( पिच्छ ) उनके लिये वस्त्र रूप थे दया का परित्याग करके ही चारों तरफ व्याप्त हो गये ऐसा नहीं किन्तु दया से युक्त हो थे ॥ ४ ॥

द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥ ४३ ॥

( गूढचतुर्थपाद )

द्युवियदिति ॥ द्यां स्वर्गं वियदन्तरिक्षं च गामिनी व्यापिनी द्युवियद्गामिनी । द्वितीयाश्रितातीतेषु गम्यगाम्यादीनामुपसंख्यानात्समासः । तारेणोच्चैस्तरेण संरावेण नादेन विहता भिन्ना श्रुतयः कर्णा यया सा तथोक्ता । हैमी हेममयी इषुमाला बाणधारा तडिद्विद्युतां संहतिरिवोक्तविशेषणा विद्युन्मालेव । शुशुभे चतुर्थपादवर्णानां त्रिपाद्यां सम्भवाद्गूढचतुर्थपादमिदम् ॥ ४३ ॥

शङ्कर भगवान् के द्वारा प्रक्षिप्त सुवर्णमयी बाणपङ्क्ति जो कि स्वर्ग तथा आकाश पथ में सञ्चरण कर रही थी अपने उच्चस्वर से सब प्राणियों के श्रवण को भेदन करती हुई ( कान के पर्दों को फाड़ डालती हुई ) बिजली के समूह के सदृश शोभायमान होने लगी ॥ ४३ ॥

विलङ्घ्य पत्रिणां पङ्क्तिं भिन्नः शिवशिलीमुखैः ।
ज्यायो वीर्यमुपाश्रित्य न चकम्पे कपिध्वजः ॥ ४४ ॥

विलङ्घ्येति ॥ शिवशिलीमुखैः पत्रिणां पङ्क्तिं विशिखावलिं विलङ्घ्यातिक्रम्य भिन्नो विद्धः कपिध्वजोऽर्जुनो ज्यायः प्रशस्तम् । 'वृद्धप्रशस्ययोर्ज्यायान्' इत्यमरः । वीर्यं सत्त्वम् । उपाश्रित्यावलम्ब्य न चकम्पे न चचाल । किन्तु तान्सहमानस्तस्थाविवेत्यर्थः ॥ ४४ ॥

शङ्कर भगवान् के बाणों ने अर्जुन के बाण जाल को बीच कर ( काटकर ) उन्हें विद्ध कर दिया । फिर भी वे कपिध्वज ( अर्जुन ) उत्कृष्ट पराक्रम का आधार ले रणभूमि से विचलित न हुये ( किन्तु उन्हें सहन करते रहे ) ॥ ४ ॥

शतशो विशिखानवद्यते भृशमस्मै रणवेगशालिने।
प्रथयन्ननिवार्यवीर्यतां प्रजिघायेषुमघातुकं शिवः ॥ ४८ ॥

शतश इति॥ शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने रणसंरम्भशोभिनेऽस्मै पार्थाय भृशमत्यर्थम्। अनिवार्यवीर्यताम्। निजामिति शेषः। तस्मै प्रथयन् दर्शयन्। किं तु अघातुकममारकम्। 'लष पत'—इत्यादिना उकञ्। इषुम्। जातावेकवचनम्। प्रजिघाय प्रयुयुजे। 'हि गतौ' इति धातोर्लिट्। 'हेरचङि' इति कुत्वम् ॥ ४८ ॥

भगवान् शूली ने सैकड़ों शरों को खण्डित करते हुए संग्राम के वेग से सुशोभित उस अर्जुन को अपने अनतिक्रमणीय पराक्रम का प्रभाव दिखलाते हुए उन बाणों से, जो घातक नहीं थे, प्रहार किया ॥ ४८ ॥

शम्भोर्धनुर्मण्डलतः प्रवृत्तं तं मण्डलादंशुमिवांशुभर्तुः।
निवारयिष्यन्विदधे सिताश्वः शिलीमुखच्छायवृतां धरित्रीम् ॥ ४९ ॥

शम्भोरिति॥ सिताश्वोऽर्जुनः शम्भोर्धनुर्मण्डलतो धनुर्मण्डलात् प्रवृत्तं निष्क्रान्तमिषुम्। अंशुभर्तुरर्कस्य मण्डलात् प्रवृत्तमंशुमिव। अत्रापीषुजातावेकवचनम्। निवारयिष्यन् निवारयितुकामः। क्रियार्थक्रियायां लृटि तस्य शत्रादेशः। धरित्रीं भुवं शिलीमुखानां छाया शिलीमुखच्छायम्। 'छाया बाहुल्ये' इति नपुंसकत्वम्। तेन वृतां व्याप्तां विदधे कृतवान्। शरच्छायावृतां धरित्रीमकरोदित्यर्थः। उपमालङ्कारः ॥ ४९ ॥

शुभ्रतुरङ्गमवाहन (अर्जुन) ने शंकर के धनुष (अवयव) मण्डल से निस्सृत बाण से, जो कि सूर्यमण्डल से निस्सृत किरण के सदृश था, रक्षा के लिये बाणों की छाया से पृथ्वी को ढँक लिया ॥ ४९ ॥

घनं विदार्यार्जुनबाणपूगं ससारबाणोऽयुगलोचनस्य।
घनं विदार्यार्जुनबाणपूगं ससार बाणोऽयुगलोचनस्य ॥ ५० ॥

घनमिति॥ अयुगलोचनस्य विषमनेत्रस्येशस्यालोचनस्य। लोच्यतेऽसौ लोचनः। कर्मणि ल्युट्। न लोचनोऽलोचनस्तस्य अलोचनस्यात्यासुष्मज्ञानविषयस्य सम्बन्धी [illegible]रो बलः बाणः शब्दस्ताभ्यां सारबाणाभ्यां स्थिरशब्दाभ्यां सह वर्तत इति ससारबाणः। बवयोरभेद इत्युक्तम्। न युज्यते कुत्रापीत्ययुक् सङ्गरहितः। क्विप्। बाणः शरः। जातावेकवचनम्। घनं सान्द्रमर्जुनस्य बाणपूगं शरजालं विदार्य विभिद्य घनं निबिडं विदार्यो भूमिकूष्माण्डो लताविशेषः अर्जुनाः ककुभवृक्षाः बाणा नीलसैरेयकाः पूगाः क्रमुकास्तेषाम्। 'विभाषा वृक्ष-' इत्यादिना द्वन्द्वैकवद्भावः। विदार्यार्जुनबाणपूगं ससार। विवेशेत्यर्थः। 'सृ गतौ'। यद्वा,—तदालोचनं सुगलोचनस्यार्जुनस्य ससारेत्यर्थः ॥ ५० ॥

अन्वेषक विकाश = वीना = पक्षियोंकी काश = गतिको अर्थात् आकाशमें प्राप्त हुए । शंकर भगवान्‌को देखनेके लिये उनके भक्त लोग आकाशमें उपस्थित हुए ।

अर्जुनके असंख्य बाण सर्वत्र व्याप्त होगये जिससे शंकर भगवानके बाण खण्डित कर दिये गये इस प्रकारके अर्जुनके रण कौशलको देख दानवापहारी शङ्करके गण आश्चर्यमें पड गये—मनुष्यमें यह अलौकिक सामर्थ्य है । शङ्कर भगवान और तपस्वी अर्जुनके युद्धको देखनेके लिये शङ्करके भक्तलोग आकाशमें आ पहुँचे ॥ ५२ ॥

संपश्यतामिति शिवेन वितायमानं लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्यम् ।
अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां रोमाञ्चमञ्चिततरं बिभराम्बभूवु ॥५३॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये पञ्चदशः सर्गः ।

संपश्यतामिति ॥ इति इत्थं शिवेन वितायमानं विस्तार्यमाणम् । 'तनोतेर्यकि' इति वैकल्पिक आकारादेशः । लक्ष्मीवतो भाग्यवतः । 'मादुपधायाः–' इत्यादिना मतुपो मस्य वकारः । क्षितिपतेस्तनयस्यार्जुनस्य वीर्यं शौर्यं संपश्यतां तत्त्वविदामपि हरेरवतारोऽयमिति विदुषामपि । किमुतान्येषामिति भावः । मुनीनामङ्गानि गात्रा-[illegible] । अभिन्नमविरलम् । अञ्चिततरमतिरुचिरतरं रोमाञ्चं रोमहर्षं बिभाराम्बभूवुर्बभ्रुः । 'भीह्री–' इत्यादिना विकल्पादाम्प्रत्ययः ॥ ५३ ॥

इति किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां पञ्चदशः सर्गः समाप्तः ।

जयश्री सम्पन्न धराधिपकुमार ( अर्जुन ) के पराक्रम को, जो कि शङ्कर भगवानके द्वारा विस्तृत हो रहा था, देखते हुए 'यह अर्जुन विष्णुके अंश हैं' इस रहस्यके ज्ञाता तपस्वियोंके अङ्ग अविरल और अत्यन्त रम्य रोमाञ्च ( रोमहर्ष ) को धारण करने लगे अर्थात् वे लोग रोमाञ्चित हो उठे ॥ ५३ ॥

पञ्चदश सर्ग समाप्त

## षोडशः सर्गः ।

ततः किराताधिपतेरलघ्वीमाजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कश्चिरं विचिन्वन्निति कारणानि ॥ १ ॥

तत इति ॥ ततोऽनन्तरं किराताधिपतेः शबरस्वामिनः । अलघ्वीं गुर्वीम् । आजिक्रियां रणकर्म वीक्ष्य विवृद्धमन्युर्विवृद्धकोपो विविक्तो निष्कलङ्कस्तर्क ऊहो ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभराधिक्यकारणानि विचिन्वन् विमृशन् । इति इत्थं वक्ष्यमाणप्रकारेण तर्कयामासाभ्यूहितवान् ॥ १ ॥

फेना इव चामरफेनास्तेषां पङ्क्तयः परिस्फुरन्त्यश्चामरफेनानां पङ्क्तयो यत्र तत्त-थोक्तम् । अश्वीयमश्वसमूहः । 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः । जलधेरम्भ इव विभिन्नमर्यादमुन्मर्यादमुच्छलत्सलिलं यथा तथा, आशा दिशो नातनोति नावृणोति ॥ ४ ॥

चमचमाते हुये भाले उत्तुङ्ग तरङ्गके सदृश और स्फुरण करते हुए चमर फेनराशिके सदृश हैं। इनसे युक्त अश्वों के समूह, जो समुद्रीय जल के सदृश हैं, इस संग्राम में क्षुब्ध हो कर स्वच्छन्द स्वतन्त्रतापूर्वक दिशाओं को क्यों नहीं व्याप्त करते हैं ? ॥ ४ ॥

हताहतेत्युद्धतभीमघोषैः समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥

हतेति ॥ हत प्रहरत । आहत विध्यत । हन्तेर्लोट् । मध्यमपुरुषबहुवचनम् । 'अनुदात्तोपदेश–' इत्यादिनाऽनुनासिकलोपः । आहतेत्यत्र कर्मणि प्रयोगासम्भवेऽपि हन्ते स्वाभाविकसकर्मकत्वस्यानपायात् । अकर्मकत्वस्य चात्राविवक्षितत्वेन कर्मण्युत्पत्तेः सम्भवात् 'आङो यमहनः' इत्यात्मनेपदम् । इत्येवमुद्धताः प्रगल्भा भीमाश्च घोषा येषां तैः । योद्धृभिर्योधैः । अभ्यमित्रममित्राभिमुखं समुज्झिताः मुक्ता विवस्वतोऽंशुभिः प्रतिफलितैरिति भावः । ज्वलिताः दीपिताः अत एव प्राप्तास्त्विषा त्विष इव त्विषो याभिस्ताः हेतयः शस्त्राणि । खे न पतन्ति । तद्वदसन्तो न दृश्यन्त इत्यर्थः । 'हेति-र्ज्वालायुधे' इति विश्वः ॥ ५ ॥

इस रणभूमिमें 'मारो ! काटो !' इस प्रकारके तुमुलरवकारी योद्धाओंके द्वारा शत्रुओं पर प्रक्षिप्त शस्त्र आकाशमें सूर्यकी किरणोंसे उद्दीप्त हो विद्युल्लता की कान्ति धारण करते हुये अब नहीं गिर रहे हैं ( अन्य रणक्षेत्र में ऐसा होता था ) परन्तु नहीं कहा जा सकता कि इस निर्बलताका क्या कारण है ? ॥ ५ ॥

अभ्यायतः संततधूमधूम्रं व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं तनोति न व्योमनि मातरिश्वा ॥ ६ ॥

अभीति ॥ अभ्यायतो वीरान्हन्तुमभ्यागच्छतः । इण् शतृप्रत्ययः । अन्तकस्य कालस्य सम्बन्धि संततं सततं धूमवद्धूम्रं व्यापि व्यापकं प्रभाजालमिव स्थितं प्रतूर्णै-र्वेगवद्भिरश्वै रथाङ्गै रथचक्रैश्च नुन्नं प्रेरितं रजो मातरिश्वा मरुत् । व्योमन्यन्तरिक्षे न तनोति न विस्तारयति ॥ ६ ॥

यह पवन वीरों का वध करनेके लिये समागत यमराजके प्रभापुञ्जके सदृश सर्वदा धूमके सदृश धूम्रवर्णको, वेगशाली घोड़े और रथके पहियोंके द्वारा सञ्चूर्णित सर्वत्रव्यापिनी धूलको आकाशमें फैला नहीं रहा है ( जैसा अन्य लड़ाइयोंमें होता था। फिर क्या कारण है मेरी शक्ति क्रमशः क्षीण होती जाती है ? ) ॥ ६ ॥

असृङ्नदीनामुपचीयमानैर्विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैः पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥

असृगिति ॥ असृङ्नदीनां तटान्युपचीयमानैरुपचयं नीयमानैस्तथा ध्वजिन्याः पदवीं विदारयद्भिः सञ्चारं कुर्वद्भिः । 'विदूरयद्भिः' इति पाठे विदूरां दूरसञ्चारां कुर्वद्भिः । आश्यानाः ईषच्छुष्काः । 'संयोगादेरातो धातोर्यण्वतः' इति श्यायतेर्निष्ठानत्वम् । घनाः सान्द्रास्तैः । आश्यानघनैः शोणितौघैः पङ्कैरिवोच्छ्रायं वृद्धिं नायान्ति न प्राप्नुवन्ति ॥ १० ॥

रुधिर की नदियों के तट शोणित से सम्यक् रक्तराशि का कीचड़, जो कि सेना के रास्ता को तोड़ रहा था, मानो शुष्क कीचड़ के ढेर से ऊँचे तो इस युद्ध में नहीं जाते हैं ॥१०॥

परिच्युते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानां मन्दारमाला विरलीकरोति ॥ ११ ॥

परीति ॥ इह रणे दन्तिदन्तैर्गजदन्तैः परिक्षते क्षतिते वक्षसि नभसः पतन्ती प्रियायाः अङ्क इव शीता शीतला सुखकरी मन्दारमाला । सुरैर्मुक्तेति शेषः । प्रियं साहसं येषां तेषां प्रियसाहसानाम् । यतो गजाभिघातिनामिति भावः । प्रमोहं प्रहारमूर्च्छां न विरलीकरोति मन्दीकरोति । नापनयतीति यावत् ॥ ११ ॥

इस युद्ध में हाथियों के दाँत से विदीर्ण वीरों के वक्ष स्थल पर कामिनी के अङ्क के सदृश शीतल मन्दार की माला, जो देवताओं से मुक्त होकर आकाश से गिरती है, उन वीरों की, जो साहस प्रिय हैं मूर्च्छा को न्यून नहीं करती ॥ ११ ॥

निषादिसन्नाहमणिप्रभौघे परीयमाणो करिशीकरेण ।
अर्कत्विषोन्मीलितमभ्युदेति न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥

निषादीति ॥ करिणां शीकरेण शुण्डाम्बुकणेन परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहाः । 'हस्त्यारोहा निषादिनः' इत्यमरः । तेषां सन्नाहाः कवचानि तेषां मणिप्रभौघे रत्नांशुजाले । अर्कस्य त्विषा तेजसा । उन्मीलितमुत्पादितम् । आखण्डलकार्मुकस्य इन्द्रधनुषः । 'आखण्डलः सहस्राक्ष' इत्यमरः । खण्डं नाभ्युदेति ॥१२॥

महावतों ( हाथी के सवारों ) के कवच में जटित रत्नों के किरणपुञ्ज हाथियों के शुण्ड से निस्सृत जलकण से व्याप्त हो सूर्य की किरणों से सम्बन्धित इन्द्रधनुष के खण्ड की भाँति इस युद्ध में उदय नहीं होता है ( जैसा अन्य युद्ध में होता था ) ॥ १२ ॥

महीभृता पक्षवतेव भिन्ना विगाह्य मध्यं परवारणेन ।
नावर्तमाना निनदन्ति भीममपां निधेराप इव ध्वजिन्यः ॥ १३ ॥

महीति ॥ पक्षवता सपक्षेण महीभृता मैनाकेनेव परवारणेन शत्रुगजेन मध्यं विगाह्य प्रविश्य भिन्ना क्षोभिता ध्वजिन्यः सेनाः । 'ध्वजिनी वाहिनी सेना' इत्यमरः ।

क्षपां निधेः सागरस्य । आप इव । आवर्तमाला अम्भसां सत्य । स्यादावर्तोऽम्भसां भ्रमः इत्यमरः । भीमं न निनदति ॥ १३ ॥

जिस प्रकार सपक्ष मैनाक पर्वत ने वेग के साथ समुद्र के बीचोबीच गिरकर समुद्र के जल को भिन्न कर दिया था और वह भ्रमित होकर गम्भीर गर्जन करने लगा था उसी तरह शत्रु के हाथी सेना के बीच में घुसकर उसे भिन्न कर दिया पुनः सेना भ्रमित होकर प्रचुर ध्वनि जैसी अन्य युद्ध में होती थी इस युद्धक्षेत्र में तो वैसा नहीं होता है फिर मेरी इस दशा का क्या कारण है ? ) ॥ १३ ॥

महारथानां प्रतिदन्त्यनीकमधिस्यदस्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव मातङ्गहस्तैर्व्रियते न पन्थाः ॥ १४ ॥

महारथानामिति ॥ प्रतिदन्त्यनीकं दन्तिसैन्यं प्रति । अनीकं तु रणे सैन्ये इति विश्व । अधिस्यदा महारथाः स्यन्दना यथा यत्र तत्तथा । रहस्त्वरसी तु रयः स्यद इत्यमरः । उत्थितानां प्रस्थितानां महारथानां रथिकविशेषाणाम् । आत्मानं सारथिं चाश्वान् रक्षन्युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥ इति लक्षणात् । पन्था मार्गः आमूलात् लूनैश्छिन्नैः । मातङ्गहस्तैर्गजकरैः । अतिमन्युनाऽतिक्रोधेनेव न व्रियते न निरुध्यते ॥ १४ ॥

महारथियों की सेना के प्रति जिसमें महान् ( अचक ) वेगशाली रथ थे युद्धार्थ प्रस्थान किया । महारथियों के मार्ग का अवरोध हाथियों के समूल विच्छिन्न शुण्ड के द्वारा अत्यन्त क्रोध के साथ भी तो ( इस युद्ध में ) नहीं होता ॥ १४ ॥

च्युतोत्पलापीड इव प्रियायाः शिरोरुहाणां शिथिलः कलापः ।
न बर्हभारः पतितस्य शार्ङ्गैर्निषादिवक्षस्युपहासमातनोति ॥ १५ ॥

च्युतेति ॥ पतितस्य पक्षि अथवा शार्ङ्गोऽस्त्रोऽस्य सम्बन्धी । वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् इत्यमरः । बर्हभारस्तन्वूकबद्धो काञ्चनपिच्छकलापो च्युतोत्पलापीडः कुवलयशेखरो यस्मिन् स प्रियायाः सम्बन्धी शिथिलः तस्य शिरोरुहाणां कलापः केशपाश इव निषादिनो हस्त्यारोहस्य वक्षःस्थलं मातनोति व्याप्नोति ॥ १५ ॥

वक्षःस्थल पर पड़े हुये प्रिया के शिथिल केशपाश जिसमें कमल पुष्प का आभूषण लगा हुआ हो की तरह वीरों के वक्षःस्थल में गड़े हुये बरछे के मूल में हुये उस शिखी पिच्छ ( मोर पंख ) इस युद्ध में और युद्ध की भाँति वक्षःस्थल को व्याप्त तो नहीं करते हैं ( क्या बात है कुछ भी समझ में नहीं आती ? ) ॥ १५ ॥

उज्झत्सु संहार इवास्तसंख्यमह्नाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं न व्याददात्याननमत्र मृत्युः ॥ १६ ॥

उज्झत्स्विति ॥ अत्र आहवे । संहारे कल्पान्त इव तेजस्विषु वीरेषु । प्रस्तसंस्यम-सव्यं यथा तथा, अह्नाय झटिति । 'द्राक्झटित्यञ्जसाह्नाय' इत्यमरः । जीवितान्युज्झत्सु त्यजत्सु सत्सु मृत्युर्लोकत्रयस्यास्वादने भक्षणे लोला गृध्नुर्जिह्वा यस्मिंस्तत् । आननं न व्यादद्वाति न विवृणोति । 'आङो दोऽनास्यविहरणे' इत्यत्रानास्यविहरण इति निषेधात् परस्मैपदम् ॥ १६ ॥

इसके अतिरिक्त अन्य संग्राम में मुझे जहाँ (अवसर प्राप्त हुआ है) मैंने देखा है— प्रलयकाल के समान युद्ध में बड़ी शीघ्रता के साथ असख्य वीर जब अपने प्राण का परित्याग कर रहे थे उस क्षण मृत्यु तीनों लोक के जीवों के भक्षण रस के आस्वादन से चञ्चल जिह्वायुक्त मुख को खूब मनमाना खोल देती थी परन्तु इस युद्ध में वह वैसा नहीं करती है (इसमें क्या रहस्य है पता नहीं?) ॥ १६ ॥

सत्यमेव, तथापि किमेतत्कुतूहलम्, तत्राह—

इयं च दुर्वारमहारथानामाक्षिप्य वीर्यं महतां बलानाम् ।
शक्तिर्ममावस्यति हीनयुद्धे सौरीव ताराधिपधाम्नि दीप्तिः ॥ १७ ॥

इयमिति ॥ इयं मम शक्तिश्च दुर्वारा पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्यमाक्षिप्य निरस्य ताराधिपधाम्नि चन्द्रतेजसि । सूर्यस्येयं सौरी । 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति ङीप् यकारस्य लोपः । दीप्तिरिव हीनयुद्धे किरातरणे । अवस्यत्यवसीदति । एतच्च विस्मयमयुक्त चेति भाव । 'षोऽन्तकर्मणि' इति धातोर्लट् ॥ १७ ॥

यह मेरी दयाशक्ति महान् पराक्रमी महारथियों की विशाल सेना के वीर्य को तिरस्कार कर मेरी भी इस युद्धस्थल में सूर्यसम्बन्धिनी दीप्ति जिस प्रकार शशाङ्कमण्डल के मण्डल में प्राप्त होकर बेचारी बनी रहती है उसी प्रकार वह किरात के साथ समाम में प्राप्त होकर अवसन्न हो रही है ॥ १७ ॥

माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः ।
गाण्डीवमुक्ता हि यथापुरा मे पराक्रमन्ते न शराः किराते ॥ १८ ॥

मायेति ॥ एषा शक्तिह्रासरूपा माया स्वित् देवतामोहनं नाम । मतिविभ्रमो बुद्धिविपर्ययो वा । अथवा मे वीर्यं ध्वस्तं नष्टं नु । उताहमन्योऽर्जुनो न वा । कुतः ? हि यस्मात्, गाण्डीवमुक्ता मे शराः यथापुरा यथापूर्वम् । परिपन्थिष्विवेत्यर्थः । किराते न पराक्रमन्तेऽप्रसिवन्मेन प्रवर्तन्ते । 'उपपराभ्याम्' इति क्रमावात्मनेपदम् । वृत्तिरप्रतिबन्ध ॥ १८ ॥

यह शक्ति ह्रास-रूपात्मिका माया तो नहीं है, अथवा मेरी बुद्धि में ही पत्थर तो नहीं पड़ गया है अथवा मेरा सारा बल ही क्षीण हो गया है। वह जो सम्भव हो सकता है कि—

में अर्जुन ही नहीं । क्योंकि गाण्डीव से प्रक्षिप्त मेरे बाण जिसप्रकार पहले पराक्रम करते थे वैसा इस किरात के विषय में पराक्रम नहीं दिखलाते किन्तु मुख फेर लेते हैं ॥१८॥

पुंसः पदं मध्यममुत्तमस्य द्विधेव कुर्वन् धनुषः प्रणादैः ।
नूनं तथा नैष यथास्य वेषः प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥

पुंस इति ॥ किंच उत्तमस्य पुंसः पुरुषोत्तमस्य मध्यमं पदमाकाशं धनुषः प्रणादैः । उपसर्गादसमासेऽपि णोपदेशस्य इति णत्वम् । द्विधा कुर्वन्निव विदारयन्निव स्थितः स एष किरातो नूनं तथा तथाभूतो न । कीदृशस्तत्राह—अस्य पुरुषस्य यथा यथाभूतो वेषः । वर्तत इति शेषः । वेषतः एवायं किरातो न स्वरूपत इत्यर्थः । कुतः । हि यस्मात्, चेष्टा व्यापारः प्रच्छन्नमपि निगूढमपि स्वरूपम् । ऊहयते तर्कयते । तस्याः स्वभावादव्यभिचारादिति भावः ॥ १९ ॥

यह पुरुष धनुष की प्रबल टङ्कार से नारायण के मध्यम स्थान ( आकाश ) को विदीर्ण करके दो भाग करते हुए की तरह मालूम पड़ता है वह किरात अवश्य वैसा इसका वेष दृष्टिगोचर हो रहा है वैसा नहीं है अर्थात् वेष भूषा से तो यह किरात है स्वरूपतः तो कोई अन्य ही क्योंकि कर्तव्यानुष्ठान गुप्त वस्तु के प्रकाशन करने में समर्थ होता है ॥ १९ ॥

अथ चतुर्भिस्तदेवाचष्टे—

धनुः प्रबन्धध्वनितं रुषेव सकृद्विकृष्टा विततेव मौर्वी ।
संधानमुत्कर्षमिव व्युदस्य मुष्टेरसंभेद इवापवर्गे ॥ २० ॥

धनुरिति ॥ धनुः रुषेव प्रबन्धेनाविच्छेदेन ध्वनितम् । ध्वनतेः कर्तरि क्तः । मौर्वी च सकृद्विकृष्टा विततेवैकवाराकर्षणादेव विततेव स्थिता । संधानं बाणसंधानं उत्कर्षं समागुरुसरणं व्युदस्येव वर्जयित्वा । किन्तु कृतमिति शेषः । अपवर्गे बाणमोक्षेऽपि मुष्टेरसंभेदोऽसंश्लेष इव । मुष्टिबन्धं विनैव बाणमोक्षः कृत इवेति हस्तलाघवोक्तिः ॥ २० ॥

क्रोध के साथ ही इस पुरुष के धनुष में अविच्छिन्न ध्वनि निकलने लगती है । एक बार के खींचने से धनुष की प्रत्यञ्चा मालूम पड़ता है खींची हुई रह जाती है ( वस्तुतः बार बार बाण छोड़ने के लिये खींची जाती है परन्तु पता नहीं चलता ) बाणों का संधान इस प्रकार से हो रहा है जैसे तूणीरसे निकाला ही नहीं जा रहा है स्वयं निकलते हुए की तरह है । बाण मोक्ष के विषय में तो कहना ही क्या ! मुष्टि तो बाँधना ही नहीं पड़ता ( अर्थात् बाण का आदान और मोक्ष बड़े लाघव के साथ हो रहा था ) ॥ २० ॥

असावनवष्टब्धनतौ समाधिः शिरोधराया रहितप्रयासः ।
धृता विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥

असाविति ॥ किंच असावनवष्टब्धो निरालम्बस्तथापि नतौ च तौ नतौ चानवष्टब्धनतौ शिरोधराया कंधरायाः समाधिः संस्थानविशेषेण रहितः प्रयासो यस्य स तथोक्तः ।

निःप्रयास इत्यर्थः । तथा विकारास्त्यक्ता । अस्तत्वान्निर्विकारेणेत्यर्थः । मुखेन शशलाञ्छनस्य इन्दोः प्रसादरूपमीधंता । असमवस्तसम्बन्धो निदर्शनालङ्कार ॥ २१ ॥

इस किरातराज के कंधे अविचल और झुके हुए हैं। ग्रीवा भी सस्थान विशेष से अविचल है किसी प्रकार का प्रयास विदित नहीं होता है। मुखमण्डल पर किसी प्रकार की विकृति नहीं है जिससे शशाङ्क ( चन्द्रमा ) की प्रसन्नतारूपी शोभा छायी हुई है ॥ २१ ॥

प्रहीयते कार्यवशागतेषु स्थानेषु विष्टब्धतया न देह. ।
स्थितप्रयातेषु ससौष्ठवश्च लक्ष्येषु पातः सदृशः शराणाम् ॥ २२ ॥

प्रहीयत इति ॥ तस्य देह कार्यवशेन प्रयोजनवशेन आगतेषु स्थानेष्वालीढादि-स्थानकेषु विष्टब्धतया स्थिरतया कर्त्रा न प्रहीयते न त्यज्यते । किंतु स्थिर इव तिष्ठतीत्यर्थः । सुष्ठु भाव सौष्ठव लाघवम् । उद्गात्रादित्वादञ्प्रत्यय । तेन सह वर्तमान ससौष्ठव शराणा पातस्थ स्थिताम्यचलानि प्रयातानि चलानि तेषु स्थित-प्रयातेषु चलाचलेषु लक्ष्येषु विषये सदृश एकरूप ॥

इनका शरीर समागस्थल में प्रयोजनवश पैतरा बदलते समय विचलित नहीं होता किन्तु स्तब्ध रहता है। एक ओर अविचल उभयविध लक्ष्यों पर लाघव के साथ इनका बाणप्रक्षेप भी एक समान है ॥ २२ ॥

परस्य भूयान्विवरेऽभियोग प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसभाव्यमिद गुरौ वा न सभवत्येव वनेचरेषु ॥ २३ ॥

परस्येति ॥ किंच, परस्य विवरे रन्ध्रे । अल्पेऽपीति शेष । भूयान् भूयिष्ठ प्रसह्य हठादिति अभियोगो ग्रहणम्। परस्य रन्ध्रज्ञानात्प्रहारोद्योग इत्यर्थ । आत्मनो रन्ध्रे विवरे । अनल्पेऽपीति शेष । प्रसह्य हठादिति सरक्षण गोपन [illegible] । भूयिष्ठमिति शेष । इद द्वय भीष्मेऽपि गुरौ वा द्रोणे वापि असंभाव्य दुर्विलभ्यं वनेचरेषु न संभवत्येव।अतो नाय किरात, किंत्वेष तिरोहितवेष कोऽप्यमानुष पुरुष इति भाव ॥

शत्रु में यदि अल्पमात्र की भी त्रुटि देख पाते हैं तो उसके सम्पूर्ण छिद्रों को जान लेते हैं। अपना दोष यदि अधिक भी है तो उसे शीघ्र ही गोपन कर देते हैं ये दोनों कार्य ( शत्रु के अल्प दोष से उसके सम्पूर्ण छिद्रों को जान लेना और अपने अधिक से अधिक दोषों का निगूहन कर लेना ) भीष्म पितामह तथा आचार्य द्रोण में असम्भावित सा है फिर जङ्गली जाति में तो इसकी सम्भावना ही नहीं की जा सकती। अत यह किरात नहीं है किन्तु अपना वेष छिपाये हुये कोई देवता या दानव है ॥ २३ ॥

अप्राकृतस्याहवदुर्मदस्य निवार्यमस्यास्त्रबलेन वीर्यम् ।
अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकारस्य रिपोर्विवृद्धि ॥ २४ ॥

ससर्दिव। नयाना प्रतिभा प्रज्ञाशक्ति सैव गुणस्तस्य निरास प्रतिभाक्षय विदधे चक्रे ॥ २७ ॥

यह घोर निद्रा सभा के समान प्रमथगणों को ही सबसे पहले हठात् प्राप्त करके मूढ़ता की पद्धति का विनाश करती हुई प्रमथ गणों के बुद्धि शक्ति रूप गुणों का नाश कर दिया ( अर्थात् सब की सब सेना निद्रा निलीन हो गई) ॥ २७ ॥

गुरुस्थिराण्युत्तमवंशजत्वाद्विज्ञातसाराण्यनुशीलनेन ।

केचित्समाश्रित्य गुणान्वितानि सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८ ॥

गुर्विति ॥ केचिदुत्तमवंशजत्वात् वंशो वेणु कुल च। 'वंशो वेणौ कुले च' इति विश्वः। गुरूणि महान्ति स्थिराणि दृढानि च गुरुस्थिराणि । अनुशीलनेन परिचय-बलेन विज्ञात सारो बलं येषां तानि गुणैर्मौर्वीभिः शौर्यादिभिश्च अन्वितानि धनूंषि सुहृत्कुलानि मित्रकुलानीव समाश्रित्य तस्थुः । धनूंष्यवलम्ब्य निद्रयुरित्यर्थः ॥ २८ ॥

सेना के कुछ लोगों ने उत्तम जाति के बाँस से उत्पन्न होने के कारण पुष्ट मजबूत से युक्त तथा विशाल धनुषों का, जिनकी पुष्टता पर अनुशीलन करने के कारण भरोसा था, अवलम्बन लेकर जहाँ के तहाँ बैठ गये जिसप्रकार उत्तम वंश में जन्म लेने वाले तथा परिश्रम के कारण जिसका हृदय विदित था ऐसे गुणयुक्त सज्जन कुल के आधार पर लोग स्थिति प्राप्त कर लेते हैं ॥ २८ ॥

कृतान्तदुर्वृत्त इवापरेषां पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।

अतर्कितं पाणितलान्निपेतुः क्रियाफलानीव तदायुधानि ॥ २९ ॥

कृतान्तेति ॥ कृतान्तदुर्वृत्ते दैवदुश्चेष्टित इव। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति विश्वः। पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि प्रतिकूलवर्तिनि सति तदा तस्मिन्काले। अपरेषामायुधानि क्रियाफलानीव कृष्यादिफलानीव अतर्कितमविचारितमेव पाणितलान्निपेतुः ॥ २९ ॥

जिस प्रकार दैव निश्चेष्टित नहीं जाना जा सकता उसी तरह पाण्डुपुत्र ( अर्जुन ) का अस्त्र विपक्षी बनकर पुरोवर्ती ( सामने ) था असम्भावित क्रिया फल के सदृश शेष लोगों के हाथ से बिना विचार किये ही शस्त्र छूटकर गिर पड़े ( अर्थात् भाग्य के पलटा खाने पर कृष्यादि सम्बन्धी फल नष्ट हो जाते हैं जिनके नष्ट होने की कभी सम्भावना नहीं रहती ) ॥ २९ ॥

असस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेषवता तरूणाम् ।

मदेन मीलन्नयना सलीलं नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥

असेति ॥ अभिन्नधैर्यास्तदानीमप्यचलधैर्याः केचिदंसस्थलैरंसभागैः सह संश्लेषवता संगच्छता तरूणां स्कन्धेषु प्रकाण्डेषु मदेन मीलन्ति नयनानि येषां ते नागा गजा इव स्रस्तकराः स्रस्तहस्ताः सन्तः सलीलं निषेदुर्निषण्णाः ॥ ३० ॥

अब भी कुछ लोग धैर्यविच्युत न होकर कभी से सहित शस्त्रों के प्रकाण्डों के आधार पर मद के कारण आखें निमीलित करते हुये लीलापूर्वक हाथ टोककर हाथी के समान खड़े हो गये ॥ ३ ॥

तिरोहितेन्दोरथ शम्भुमूर्ध्नः प्रणम्यमानं तपसां निवासैः ।
सुमेरुशृङ्गादिव बिम्बमार्कं पिशङ्गमुच्चैरुदियाय तेजः ॥ ३१ ॥

तिरोहितेति ॥ अथ तिरोहितेन्दोः किरातमायया छन्नचन्द्रात् शम्भुमूर्ध्नः सकाशात् । सुमेरुशृङ्गात् अर्कसम्बन्धि बिम्बमिव । तपसां निवासैस्तापसैः प्रणम्यमानमभिवन्द्यमानं पिशङ्गं तेजः उच्चैरूर्ध्वम् । उदियाय प्रादुर्बभूव । तत्र न मा प्रमितिमाय ॥ ३१ ॥

इस प्रकार की परिस्थिति को किरातवेशधारी भगवान् के ललाट [illegible] जो चन्द्रमा [illegible] आवृत रहता है सुमेरु शिखर से सूर्य सम्ब धी बिम्ब के समान पिङ्गल वर्ण का तेज युक्त जिसे तपस्वी लोग सूर्य समझकर प्रणाम कर रहे थे ऊपर को उत्पन्न हुआ ॥ ३१ ॥

छाया विनिर्धूय तमोमयीं तां तत्त्वस्य संवित्तिरिवापविद्याम् ।
ययौ विकासं द्युतिरिन्दुमौलेरालोकमभ्यादिशती गणेभ्यः ॥ ३२ ॥

छायामिति ॥ इन्दुमौलेर्द्युतिः कान्तिः । तत्त्वस्य संवित्तिस्तत्त्वज्ञानम् । अपविद्यामविद्यामिव तां तमोमयीं छायां निद्रां विनिर्धूय निरस्य गणेभ्य आलोकं चक्षुःप्रकाशमभ्यादिशती वितरन्ती विकासं विस्तारं ययौ ॥ ३२ ॥

शंकर भगवान् की वह द्युति उस अन्धकारमयी घोर निद्राको इस प्रकार दूर करती हुई जिसप्रकार तत्त्वज्ञान अविद्या ( अज्ञान ) का नाश करता है प्रमथगणों के लिये प्रकाश की रचना देती [illegible] सबत्र प्रसरण करने लगी ॥ ३२ ॥

त्विषां ततिः पाटलिताम्बुवाहा सा सर्वतः पूर्वसरीव सन्ध्या ।
निनाय तेषां द्रुतमुल्लसन्ती विनिद्रतां लोचनपङ्कजानि ॥ ३३ ॥

त्विषामिति ॥ सर्वतः पाटलिताः पाटलीकृता अम्बुवाहा यया सा तथोक्ता त्विषां तेजसां ततिः । पूर्वं सरतीति पूर्वसरी । पूर्वे कर्तरि इति टप्रत्यये ङीप् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वा शब्दस्य पुंवद्भावः । सन्ध्या प्रातःसन्ध्येव उल्लसन्ती प्रसरन्ती तेषां गणानां लोचनपङ्कजानि द्रुतं विनिद्रतां विकासं निनाय ॥ ३३ ॥

तेज की राशि जो सबत्र मेघमण्डलों को लोहित वर्ण में परिवर्तित कर दी थी प्रभात कालीन सन्ध्या के सदृश प्रसार करती हुई उन प्रमथगणों के नेत्रकमलों को शीघ्र ही प्रस्फुटित कर दी ( अर्थात् वे लोग जागने व नेत्र खोले ) ॥ [illegible] ॥

पृथग्विधान्यस्त्रनिरासमुग्धाः शस्त्राणि भूयः प्रतिपेदिरे ते ।
मुक्ता वितानेन बलाहकानां ज्योतींषि रम्या इव दिग्विभागाः ॥ ३४ ॥

पृथगिति ॥ अस्त्रविरामेण प्रस्वापनास्त्रोपशमेन सुद्दा विनिद्रास्ते गणा बलाहकानां वितानेन मेघपटलेन मुक्ता अत एव रम्या दिग्विभागा दिगन्ता ज्योतींषि नक्षत्राणीव । 'ज्योतिस्तारासिताब्जालाद्वमकारसात्मसु' इति वैजयन्ती । पृथग्विधानि नानाविधानि शस्त्राणि भूय प्रतिपेदिरे । जगृहुरित्यर्थं ॥ ३४ ॥

प्रस्वापनास्त्र के उपद्रवोपशमनान्तर वे शङ्कर भगवान् के प्रमथगण निद्रा का परित्याग कर फिर इसप्रकार अनेक शस्त्र धारण करने लगे जिसप्रकार मेघों के पटलों से मुक्त दिशायें तथा विदिशायें निर्मल होकर फिर नक्षत्रों को धारण कर लेती हैं ॥ ३४ ॥

द्यौरुन्मनामेव दिश प्रसेदु स्फुट विसस्रे सवितुर्मयूखै ।
क्षय गतायामिव यामवत्या पुन समीयाय दिन दिनश्री ॥ ३५ ॥

द्यौरिति ॥ तदा यामवत्या रात्रौ क्षय गताया विभातायामिव द्यौरन्तरिक्षम् । उन्मनामेव ऊर्ध्वमुत्पपातेत्युत्प्रेक्षा । दिश प्रसेदु । सवितुर्मयूखै स्फुट स्पष्ट विसस्रे विसृतम् । भावे लिट् । दिनश्रीर्दिवसकान्ति पुनर्दिन समीयाय सङ्गगाम । अत्र वैयधिकरण्येन गुणक्रिययो सहत्वेन समुच्चयोऽलङ्कार । तस्य च समुच्चयनोत्प्रेक्षया 'गुणक्रियाभ्यामप्यनुपमेयाकरणम् सङ्कर । दिक्प्रसादो गुण । शोषा क्रिया ॥ ३५ ॥

अर्जुन के अन्धकारास्त्र के शान्त होनेपर जिस प्रकार रात्रि के व्यतीत होनेपर आकाशरूप आवरण हट जाता है और दिशायें स्वच्छ हो जाती हैं मानो उसी प्रकार दिशायें निर्मल हो गई, सूर्य भगवान् की किरणें चारों तरफ प्रसार कर गईं, पुन दिवसलक्ष्मी ने दिन का आश्रय ग्रहण किया ॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्न दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान्भुजवीर्यशाली प्रबन्धनाय प्रजिघाय जिष्णु ॥ ३६ ॥

महास्त्रेति ॥ भुजवीर्यशाली जिष्णुरर्जुनो महास्त्र प्रस्वापनास्त्र तद्दुर्गमिव तस्मिन् महास्त्रदुर्गे दिग्वारणेनेव दिग्गजेनेव परेण शत्रुणा शिथिलप्रयत्नमप्रयासे यथा तथा रुग्णे भग्ने सति । 'रुजो भङ्गे' कर्मणि क्त । 'ओदितश्च' इति निष्ठातकारस्य नत्वम् । प्रबन्धनाय प्रकर्षेण बन्धनाय भुजङ्गा एव पाशास्तान् । प्रजिघाय प्रहितवान् ॥ ३६ ॥

दिग्गज के द्वारा दुर्गभेद की भांति थोड़े ही परिश्रम में रुद्र के द्वारा स्वापनास्त्र के खण्डित [illegible] जाने पर अर्जुन ने, जिसकी भुजायें पराक्रमपूर्ण थीं, शत्रुसेना को पूर्णतया बांध लेने के लिए सर्परूप पाश का प्रहार किया ॥ ३६ ॥

जिह्वाशतान्युल्लसयन्त्यजस्र लसत्तडिल्लोलविषानलानि ।
त्रासान्निरस्ता भुजगेन्द्रसेना नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥

जिह्वेति ॥ लसन्तस्तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि जिह्वा-

पृथगिति ॥ अस्त्रविरामेण प्रस्वापनास्त्रोपरमेण क्षुब्धा विनिद्रास्ते गणा बलाहकानां वितानेन मेघपटलेन मुक्ता अत एव रम्या दिग्विभागा दिगन्ता ज्योतींषि नक्षत्राणीव। 'ज्योतिस्ताराग्निभाज्वालादृक्प्रकाशात्मसु' इति वैजयन्ती। पृथग्विधानि नानाविधानि शस्त्राणि भूय प्रतिपेदिरे। जगृहुरित्यर्थः ॥ ३४ ॥

प्रस्वापनास्त्र के उपद्रवोपशमनान्तर वे शङ्कर भगवान् के प्रमथगण निद्रा का परित्याग कर फिर इसप्रकार अनेक शस्त्र धारण करने लगे जिसप्रकार मेघों के पटलों से मुक्त दिशायें तथा विदिशायें निर्मल होकर फिर नक्षत्रों को धारण कर लेती हैं ॥ ३४ ॥

द्यौरुन्ननामेव दिशः प्रसेदुः स्फुटं विसस्रे सवितुर्मयूखैः।
क्षयं गतायामिव यामवत्यां पुनः समीयाय दिनं दिनश्रीः ॥ ३५ ॥

द्यौरिति ॥ तदा यामवत्यां रात्रौ क्षयं गतायां विनाशितायामिव द्यौरन्तरिक्षम्। उन्ननामेव ऊर्ध्वमुत्पपातेवेत्युत्प्रेक्षा। दिशः प्रसेदुः। सवितुर्मयूखैः स्फुटं स्पष्टं विसस्रे विसृतम्। भावे लिट्। दिनश्रीर्दिनकान्तिः पुनर्दिनं समीयाय सङ्गताम। अत्र वैयधिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयोऽलङ्कारः। तस्य च समुन्ननामेत्युत्प्रेक्षया 'द्ववाव्यवाव्ययाङ्गप्रवेशलक्षणः सङ्करः। विमलत्वादो गुणः। शेषा क्रिया ॥ ३५ ॥

अर्जुन के अन्धकारास्त्र के खण्डित होनेपर जिस प्रकार रात्रि के व्यतीत होनेपर आकाशरूप आवरण हट जाता है और दिशायें स्वच्छ हो जाती हैं मानो उसी प्रकार दिशायें निर्मल हो गईं, सूर्य भगवान् की किरणें चारों तरफ प्रसार कर गईं, पुनः दिवसलक्ष्मी ने दिन का आश्रय ग्रहण किया ॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्नं दिग्वारणेनेव परेण रुग्णे।
भुजङ्गपाशान्भुजवीर्यशाली प्रबन्धनाय प्रजिघाय जिष्णुः ॥ ३६ ॥

महास्त्रेति ॥ भुजवीर्यशाली जिष्णुरर्जुनो महास्त्रं प्रस्वापनास्त्रं तदेव दुर्गमिव तस्मिन् महास्त्रदुर्गे दिग्वारणेनेव दिग्गजेनेव परेण शत्रुणा शिथिलप्रयत्नमल्पप्रयासं यथा तथा रुग्णे भग्ने सति। 'रुजो भङ्गे' कर्मणि क्तः। 'ओदितश्च' इति निष्ठातकारस्य नत्वम्। प्रबन्धनाय प्रकर्षेण बन्धनाय भुजङ्गा एव पाशास्तान्। प्रजिघाय प्रहितवान् ॥ ३६ ॥

दिग्गज के द्वारा दुर्गभेद की भांति थोडे ही परिश्रम में शत्रु के द्वारा स्वापनास्त्र के खण्डित हो जाने पर अर्जुन ने, जिसकी भुजायें पराक्रमपूर्ण थीं, शत्रुसेना को पूर्णतया बाँध लेने के लिए सर्परूप पाश का प्रहार किया ॥ ३६ ॥

जिह्वाशतान्युल्लसयन्त्यजस्रं लसत्तडिल्लोलविषानलानि।
त्रासान्निरस्ता भुजगेन्द्रसेना नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥

जिह्वेति ॥ लसन्त्यस्तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि जिह्वा-

स भोगिसङ्घः शममुग्रधाम्ना सैन्येन निन्ये विनतासुतानाम् ।
महाध्वरे विध्यपचारदोषः कर्मान्तरेणेव महोदयेन ॥ ४८ ॥

स इति ॥ स भोगिसङ्घः सर्पसमूहः उग्रधाम्ना तेजस्विना विनतासुतानां तार्क्ष्यपक्षिणां सैन्येन महाध्वरे महाक्रतौ विध्यपचारदोषः कर्मस्खलनदोषो महोदयेन महासामर्थ्येन, अथवा महता फलेन । तन्मूलेन प्रकृतक्रियासिद्धेरिति । कर्मान्तरेण प्रायश्चित्तेनेव शमं शान्तिं निन्ये प्रापितः ॥ ४८ ॥

जिसप्रकार महान् यज्ञ में विधिविधान की न्यूनतारूप दोष को प्रायश्चित्त के द्वारा शमन कर देते हैं उसीप्रकार परम तेजस्वी विनता कुमारों की सेना के द्वारा सर्पसमूह शमन को प्राप्त हो गया ॥ ४८ ॥

साफल्यमस्त्रे रिपुपौरुषस्य कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥४९॥

साफल्यमिति ॥ अस्त्रे सर्पास्त्रे । भाग्ये प्राग्भवीये शुभे कर्मणीव । रिपुपौरुषस्य रिपुपराक्रमस्य साफल्यं कृत्वा, अपवर्गमवसानं समाप्तिं गते सति । स्वामिवृत्त्या परसाफल्यस्याफलीकरणोपचारः । समन्युः सक्रोधो जिष्णुरर्जुनोऽनिन्धनस्येन्धनं विनैवोत्पादितस्य ज्वलनस्य ज्वलनप्रदीपकं अस्त्रमाग्नेयास्त्रं प्रसभं चीव्रं समाददे जग्राह ॥ ४९ ॥

जन्मान्तरीय शुभकर्म के सदृश सर्पास्त्र के समाप्त हो जाने पर अर्जुन ने क्रुद्ध होकर इन्धनादि सामग्री के बिना ही प्रज्वलित होने वाला पावकास्त्र (अग्निबाण) को उठाया ॥४९॥

ऊर्ध्वं तिरश्चीनमधश्च कीर्णैर्ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात प्रास्यन्तमिच्छन्निव जातवेदाः ॥ ५० ॥

ऊर्ध्वमिति ॥ ऊर्ध्वं तिरश्चीनं तिर्यक् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खप्रत्ययः । अधश्च कीर्णैर्विस्तृतैर्ज्वाला एव सटाः केसराः । 'सटा जटाकेसरयोः' इति विश्वः । तैः, लङ्घितमेघपङ्क्तिरतिक्रान्तजलदालिः । आयस्तस्य उद्यतस्य सिंहस्येवाकृतिर्यस्य स जातवेदा अग्निः प्राण्यन्तं प्राणिनां संहारमिच्छन्निवोत्पपात ॥ ५० ॥

उद्दहन के लिये उद्यतसिंह की आकृति के सदृश अग्निदेव अपने ज्वाला रूप केसर से ऊपर, और नीचे, अगल-बगल ( सर्वत्र ) व्याप्त कर तथा मेघमण्डल का अतिक्रमण करके मानों प्राणिमात्र की जीवनलीला समाप्ति कर देने की इच्छा से ऊपर को प्रज्वलित हो उठे ॥५०॥

भित्त्वेव भाभिः सवितुर्मयूखाञ्ज्वालाविष्वग्विसृतस्फुलिङ्गः ।
विशीर्यमाणाश्मनिनादधीरं ध्वनिं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥

भित्त्वेति ॥ भाभिस्तेजोभिः सवितुर्मयूखान् किरणान् । 'किरणोस्रमयूखांशु-' इत्यमरः । भित्त्वेवाभिहत्येव विष्वक् समन्ताद्विसृताः स्फुलिङ्गा यस्य सः । स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वमुत्प्रेक्ष्यते । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । अकृशो

इसप्रकार प्रलयकाल के सदृश भयानक अग्नि की अत्यन्त चञ्चल ज्वालायें धकधकाती हुई ज्योंही संसार को चटनी के सदृश चाट जाने की इच्छा कर रही थीं शंकर भगवान् ने उस पर वरुणास्त्र का प्रयोग किया जो अपनी महान् जलधाराओं को साथ लिये हुए था ॥ ५४ ॥

तत्तो धरित्रीधरतुल्यरोधसस्तडिल्लताखिङ्गितनीलमूर्तयः ।
अधोमुखाकाशसरिन्निपातिनीरपः प्रसक्तं मुमुचुः पयोमुचः ॥ ५५ ॥

तत इति ॥ ततो वरुणास्त्रप्रयोगानन्तरं धरित्रीधरतुल्यरोध[redacted] पर्वतसमप्रान्ताः । 'रोधः स्यात्प्रान्तकूलयोः' इति विश्वः । तडिल्लताभिराखिङ्गिता नीलमूर्तयो नीलाङ्गानि येषां ते पयोमुचो मेघा अधोमुखा आकाशसरिदिव निपतन्तीति अधोमुखाकाशसरिन्निपातिनीः । 'कर्तर्युपमाने' इति णिनिः । अपो जलानि प्रसक्तमनुबन्धमविच्छिन्नं यथा तथा मुमुचुः । इत प्रभृति वंशस्थवृत्तम् ॥ ५५ ॥

वरुणास्त्र के प्रयोग करते ही पर्वताकार मेघ, जिनकी कृष्णकान्ति विद्युल्लता के द्वारा आलिङ्गित की गई थी, ( अर्थात् जिनमें बिजली क्षण-क्षण पर चमकती रही थी ) नीचे की तरफ प्रवाहित होती हुई आकाश नदी की तरह अविच्छिन्न जल धाराभिवर्षण करने लगे ॥

पराहतध्वस्तशिखे शिखावतो वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं पयोनिपाताः प्रथमे वितेनिरे ॥५६॥

पराहतेति ॥ पराहता अभिहता अतो ध्वस्ता निर्वापिता शिखा ज्वाला यस्य तस्मिन् पराहतध्वस्तशिखे । अधिक्षिप्त प्रहारित आक्षिप्तम् । ताडितमिति यावत् । अत समिद्ध इद्धमिति प्रदीप्त तेजो यस्य तस्मिन् । शिखावतोऽग्नेर्वपुषि स्वरूपे । तप्तेऽयसि लोह इव कृतास्पदाः कृतस्थितयः । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्रथमे पयोनिपाता जलपाता ध्वनिं वितेनिरे विस्तारयामासुः ॥ ५६ ॥

धारापात के गिरते ही अग्नि की ज्वाला के शान्त हो जाने पर तथा आसार के प्रहार से क्षण मात्र के लिये उद्दीप्त [redacted] जाने पर तप्त लोहे के पत्र पर पड़ते हुये जल धारा की तरह ध्वनि सर्वत्र फैल गई ॥ ५६ ॥

महानले भिन्नसिताभ्रपातिभिः समेत्य सद्यः क्रथनेन फेनताम् ।
व्रजद्भिरार्द्रेन्धनवत्परिक्षय जलैर्वितेने दिवि धूमसंततिः ॥ ५७ ॥

महानल इति ॥ महानलेऽग्नौ भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः । 'कर्तर्युपमाने' इति णिनिप्रत्ययः । अत एव सद्यः क्रथनेन पाकेन फेनतां समेत्य प्राप्य परिक्षयं नाशं व्रजद्भिर्जलैरार्द्रेन्धनवद् आर्द्रकाष्ठैस्तुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । दिवि गगने धूमसंततिर्वितेने विस्तारिता । फेनादिकमार्द्रेन्धनेऽपि तुल्यम् ॥ ५७ ॥

उस प्रचण्डाग्नि में खण्ड खण्ड होकर गिरनेवाले शुभ्र बादलों के सदृश जलधारा

गिरकर शीघ्र ही कम्पित होने के कारण फेन बनकर नाश को प्राप्त होती हुई गोले भाड के समान आकाश में धुयें का ढेर रूप गयी ॥ ७ ॥

स्रक्केतुभिः पाण्डुरनीलपाटलैः समागताः शक्रधनुःप्रभाभिदः ।
असंस्थितामादधिरे विभावसोर्विचित्रचीनांशुकचारुतां त्विषः ॥५८॥

स्रक्केतुभिरिति ॥ पाण्डुरैर्नीलैः पाटलैश्च पाण्डुरनीलपाटलैर्विचित्रैः स्रक्केतुभिर्धूमैः समागताः सङ्गताः । अत एव शक्रधनुःप्रभाभिदः इन्द्रधनुर्द्युतिभाजो विभावसोरग्नेस्त्विषोऽसंस्थितामस्थिरां विचित्रस्य चीनांशुकस्य पट्टवस्त्रविशेषस्य चारुतामादधिरे दधुः ॥ ५८ ॥

अग्नि की कान्ति ने कपिश कृष्ण तथा लोहित वर्ण के धुयें से व्याप्त होकर इन्द्रधनुष की शोभा को धारण करती हुई विचित्र वर्ण के चुनरीदार वस्त्र की चारुता को जो रंग बदला करती है धारण किया ॥ ५८ ॥

जलौघसंमूर्च्छनमूर्च्छितस्वनः प्रसक्तविद्युल्ललितैधितद्युतिः ।
प्रशान्तिमेष्यन् धृतधूममण्डलो बभूव भूयानिव तत्र पावकः ॥ ५९ ॥

जलौघेति ॥ जलौघानामम्बुप्रवाहाणां संमूर्च्छनेन मेलनेन मूर्च्छितस्वनः प्रवृद्धघोषः । मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा इति सज्जनः । प्रसक्तैः सततैर्विद्युल्लतानां ललितैः स्फुरणैरेधिता वर्धिता द्युतिर्यस्य स धृतधूममण्डलो जलधारासम्भूतधूमपटलः पावकः प्रशान्तिमेष्यन् तत्र देशे भूयानिव बभूव । भूयस्त्वया स्थापित इवेत्युत्प्रेक्षा ॥ ५९ ॥

उस रणस्थल में अग्नि व प्रचण्डाग्नि जलप्रवाह के सम्पर्क से घनघनाहट की ध्वनि करता हुआ तथा बिजली के चमक जाने से और अधिक कान्ति से सम्पन्न शोभा हुआ वर्तमान हो इतिपन धूमसमूह से व्याप्त होकर बुझते समय अनेक मालूम पड़ने लगा ॥५९॥

प्रवृद्धसिन्धूर्मिचयस्थवीयसा चयैर्विभिन्नाः पयसा प्रपेदिरे ।
उपात्तसंध्यारुचिभिः सरूपतां पयोदविच्छेदलवैः कृशानवः ॥ ६० ॥

प्रवृद्धेति ॥ प्रवृद्धानां सिन्धोः समुद्रस्य ऊर्मीणां चयाः राशय इव स्थवीयसा स्थूलतरेण पयसा चयैः पूरैर्विभिन्ना विश्लेषिताः कृशानवोऽग्नय उपात्तसंध्यारुचिभिः प्राप्तसंध्यारागैः पयोदानां विच्छेदलवैः इति विच्छेदाः विच्छिन्नाः विभिन्ना ये लवाः शकलास्तैः सरूपतां समानरूपतां प्रपेदिरे इत्युपमा ॥ ६० ॥

वृद्धि को प्राप्त समुद्र की लहरों के समूह के सदृश ढेर के ढेर जलसमूह से जगह जगह विभाजित अग्नि-पुञ्ज ने सान्ध्यराग की शोभा को प्राप्त मेघ के खण्डखण्ड पड़े हुए टुकड़ों के सदृश स्वरूप धारण किया ॥ ६० ॥

उपैत्यनन्तद्युतिरप्यसंशयं विभिन्नमूलोऽनुदयाय संक्षयम् ।
तथा हि तोयौघविभिन्नसंहतिः स हव्यवाहः प्रययौ पराभवम् ॥६१॥

उपैतीति ॥ अनन्तद्युतिर्महातेजा अपि विभिन्नमूलो नष्टमूलोऽसंशयं यथा तथा ऽनुदयाय पुनरनुत्थानाय सद्यः नाशम् । उपैति । तथा हि—तोयौघैर्विभिन्नः संहतिः संघातो यस्य स तथोक्तः हव्यवाहोऽग्निः पराभवं नाशं प्रययौ । विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः ॥ ६१ ॥

जिस प्रकार जड़के छिन्न-भिन्न होने पर महान् तेजस्वी भी अवश्य नाश को प्राप्त हो जाता है उसीप्रकार जल समूह नष्ट हो जाने पर वह प्रचण्ड पावकास्त्र पराभूत हो गया ॥ ६१ ॥

अथ विहितविधेयैराशु मुक्ता वितानैरसितनगनितम्बश्यामभासां घनानाम् ।
विकसदमलधाम्नामाप नीलोत्पलानां श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः ॥

अथेति ॥ अथ अग्निनिर्वाणानन्तरम् । विहितविधेयैः कृतकृत्यैः । असितनगस्याञ्जनाद्रेर्नितम्बः कटकस्तद्वत् श्यामभासां घनानां वितानैः पटलैर्मुक्ता द्यौराकाशो वह्निदाहाद्विशेषशुद्धेव । विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां नीलोत्पलानामधिकविशुद्धामत्युज्ज्वलां श्रियं आप । निदर्शनालंकारः ॥ ६२ ॥

पावकास्त्र के शान्त होने पर अञ्जनगिरि के सदृश श्यामकान्तिधारी मेघपटलों से, जो अपने कर्तव्यपालन में सफल व छुटकारा पाकर अन्तरिक्ष वह्निदाह के कारण विकसित तथा निर्मलकान्तिसम्पन्न नीलोत्पल की अत्यन्त स्वच्छशोभा ( निर्मल श्री ) को प्राप्त हुआ ॥ ६२ ॥

इति विविधमुदासे सव्यसाची यदस्त्रं बहुसमरनयज्ञः सादयिष्यन्नरातिम् ।
विधिरिव विपरीतः पौरुषं न्यायवृत्तेः सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः ॥

इतीति ॥ बहुसमरनयाननेकरणोपायान् जानातीति बहुसमरनयज्ञः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । न तु 'इगुपध—' इत्यादिनाऽकारान्तात् 'अनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन' इति वार्तिकव्याख्याने भाष्यकारेण 'अर्थज्ञ'शब्दमुदाहृत्यास्य 'अर्थज्ञ'शब्दस्य कर्मोपपदत्वं दर्शितम् । सव्यसाची अर्जुनः । अरातिं किरातपतिं सादयिष्यन् । अवसादयितुकामः सन्नित्यर्थः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । इति पूर्वोक्तप्रकारेण विविधं यदस्त्रमुदासे । प्रक्षिप्तवानित्यर्थः । 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इत्यात्मनेपदम् । विपरीतो विधिः प्रतिकूलं दैवम् । 'विधिर्विधाने दैवेऽपि' इत्यमरः । न्यायेन नीत्या वृत्तिर्वर्तनं यस्य तस्य नीतिनिष्ठस्य पौरुषमिव नीलकण्ठः शिवः सपदि तत् अस्त्रं रिक्ततां व्यर्थताम् । उपनिन्ये । संहृतवानित्यर्थः । मालिनीवृत्तम् ॥ ६३ ॥

अनेक-विध-संग्राम-नीतिवेत्ता सव्यसाची ( अर्जुन ) ने शत्रुको विफल करने की कामना करते हुए अनेक प्रकार के अस्त्रों का प्रयोग किया भाग्य के विपरीत होने

# सप्तदशः सर्गः ।

अथ पञ्चभिः पार्थं विशेषयन् पञ्चभिः कुलकमाह—अथेत्यादिभिः—

अथापदामुद्धरणक्षमेषु मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन् स्वपौरुषेणेव शरासनेन ॥ १ ॥

अथ जयलक्ष्मीप्रत्याकाङ्क्षानन्तरम् । आपदामुद्धरणक्षमेषु आपन्निवारणसमर्थेषु । अस्त्रेषु प्रस्वापनादिषु तादृशेषु मित्रेष्विव तिरोहितेष्वन्तर्हितेषु सत्सु गुरुणा महता स्वपौरुषेणेव तादृशेन शरासनेन धृतिं धैर्यम् । अभिपुष्यन् वर्धयन् । अद्यापि धनुषि पौरुषे च सति कियानयं किरात इति धैर्यमवलम्बमान इत्यर्थः । अत एव गुरुश्रीः प्रभूतशोभासम्पत्तिः । 'पद्मा मा लक्ष्मीः श्रीर्निगद्यते' इति शाश्वतः ॥ १ ॥

( इस श्लोक से ६ तक ) अन्वय परस्पर सम्बद्ध है। अन्तिम पद्य के दो चरणों में कर्ता 'पार्थ' और क्रिया 'आश्वसे' है, शेष पद पार्थ के विशेषण हैं।

आपत्ति के प्रतिकार करने में समर्थ मित्र की भाँति स्वापनादि अस्त्रों के खण्डित होजाने पर अर्जुन अपने महान् पराक्रम के सदृश गाण्डीव धनुष के द्वारा धैर्य धारण करते हुए प्रचुर श्रीसम्पन्न हुए ॥ १ ॥

भूरिप्रभावेण रणाभियोगात्प्रीतो विजिह्मश्च तदीयवृत्त्या ।
स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः सर्पन्महाधूम इवाद्रिवह्निः ॥ २ ॥

भूरीति ॥ पुनश्च, भूरिप्रभावेण महानुभावेन सह रणाभियोगात् युद्धलाभात् प्रीतः, तदीयवृत्त्या शत्रुवृत्त्या विजिह्मो विलक्षश्च तथा स्पष्टो दीप्त्या प्रव्यक्तोऽप्यविस्पष्टो वपुःप्रकाशो यस्य सः । कुतः । सर्पन् प्रसरन् महान्धूमो यस्य स सर्पन्महाधूमोऽद्रिवह्निरिव स्थितः ॥ २ ॥

वे ( अर्जुन ) महान् व्यक्ति के साथ युद्धलाभ से तो प्रसन्न थे परन्तु शत्रु के उत्कर्ष से उनकी मुखकान्ति म्लान प्रतीत हो रही थी। वे दीप्ति से प्रकाशित हो रहे थे तो भी पर्वतस्थ अग्नि के सदृश, जिसमें धूम ही का आधिपत्य रहता है, अप्रकाशित ही प्रतीत हो रहे थे ॥ २ ।

तेजः समाश्रित्य परैरहार्यं निजं महन्मित्रमिवोरुधैर्यम् ।
आसादयन्नस्खलितस्वभावं भीमे भुजालम्बमिवारिदुर्गे ॥ ३ ॥

तेज इति ॥ पुनश्च, परैररिभिरहार्यमनभिभवनीयं निजं स्वकीयं महत्तेजो वीर्यं मित्रमिव समाश्रित्य । अत एव भीमे भयानकेऽरिभिरेव दुर्गं तस्मिन् अरिदुर्गे शत्रुसङ्कटे । अस्खलितस्वभावमचलशीलमुरु महत् धैर्यं भुजालम्बमिव हस्तावष्टम्भमिव आसादयन् प्राप्नुवन् । ईदृशे सङ्कटेऽपि महावीर्यत्वाद्धैर्यमत्यजन्नित्यर्थः ॥ ३ ॥

व शत्रुओं के द्वारा अनतिक्रमणीय अपने महान् तत्त्वात् मित्र के समान आश्रय

चेतो रमयन्तु । प्रयोग सन्धानमोक्षादि शिक्षाऽभ्यासो गुणस्तद्सहितोऽतिशयो मौर्वी वा, अन्यत्र तु,-प्रयोगोऽभिगुरुत्वव्यवहार शिक्षाऽभ्यासो गुणा स्वस्वस्थानकरणादय श्लेषप्रसादादयो वा ते भूषण येषा तेषु । यथा यथासूक्त अर्था येषा तेषु यथार्थेषु । अन्यत्र,-नियतार्थेषु । भणन्ति हिंसन्तीति शरास्तेषु जयस्य । तत्त्विर्वाहकत्वात्तदाधारत्वविवक्षाया सप्तमी । शब्देषु पदेषु भाव प्रवृत्तिनिमित्त सामान्यादि स एव अर्थस्तमिव । आशशासे आशशकाङ्क्षे । शास्तिवत्सस्योराङ्पूर्वयोरिच्छायामात्मनेपदमुपसख्यानात् । यथा शाब्दिका शब्दैरर्थं साधयन्ति तद्वदय शरैरेव साधयितुमिमेपेत्यर्थं ॥ ६ ॥

उपर्युक्त विशेषणों से सम्पन्न अर्जुन अपने बाणों के आधार पर शब्दों के प्रकार भावार्थ की तरह विजय की अभिलाषा करने लगे । जिस प्रकार शब्द सस्कार के कारण प्रयोगार्ह होते हैं ( प्रसाधु शब्दों के प्रयोग से प्रत्यवाय होता है ) उचित प्रयोग को शिक्षारूप गुण ही उसके भूषण है और यथार्थ ( शब्दानुकूल अर्थ प्रतिपादन ) मे समर्थ होते हैं उसी प्रकार बाण भी विशवासना के अनुकूल होने के कारण चित्त को प्रसन्न रखते ह अर्थात् उत्साह की वृद्धि में समर्थ होते हैं, इनके सधान और मोक्षादि की शिक्षा का अभ्यास ही गुण है, जो विभूषित करता रहता है । यहा भ धातु का अर्थ है हिंसा करना —अत शर हिंसाकारी होते हैं यथा नाम तथा गुण मतयय रूप से इनमें सर्वाश हो जाता है ॥ ६ ॥

भूय समाधानविवृद्धतेजा नैव पुरा युद्धमिति व्यथावान् ।

स निर्ववामास्रममर्षनुन्न विष महानाग इवेक्षणाभ्याम् ॥ ७ ॥

भूय इति ॥ भूय पुनरपि समाधानेन युद्धाय अवोच्यवसायेन विवृद्धतेजा प्रवृद्धप्रताप पुरा पुरातन युद्धमेवमिथ शक्तितायुक्त नाभवत्, इति हेतोर्व्यथावान् परितापवान् सोऽर्जुन ईक्षणाभ्या दृष्टिभ्या महानागो महासर्पो विषमिवास्रमश्रु क्रोधोत्थापितम् । अस्रमश्रु निर्ववाम निर्जगार । सात्त्विककाना रससाधारण्यादीदृश मनूयोक्ति । 'स्तम स्वेदोऽथ रोमाञ्च स्वरभेदोऽथ वेपथु । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मता' ॥ ७ ॥

'ऐसा युद्ध कभी नहीं हुआ था' इस प्रकार के दुःख से सतप्त अर्जुन पुन युद्ध के लिये निश्चय कर प्रवल तेज से प्रदीप्त होकर महानाग के समान, जो अपने दृष्टि से विष वमन करता है, क्रोध से अपने नेत्रों से जलबिन्दु गिराने लगे ॥ ७ ॥

तस्याहवायासविलोलमौले सरम्भताम्रायतलोचनस्य ।

निर्वापयिष्यन्निव रोषतप्त प्रस्नापयामास मुख निदाघ ॥ ८ ॥

तस्येति ॥ आहवायासेन युद्धायासेन विलोलमौले लुलितकेशबन्धस्य । 'चूडा किरीट केशाश्च सयता मौलयस्त्रय' इत्यमर । सरम्भताम्रे कोपारुणे आयते विस्तृते लोचने यस्य । 'सरम्भ सभ्रमे कोपे' इति विश्व । तस्यार्जुनस्य । रोषतप्त मुख

चेतो रमयन्तु। प्रयोग सन्धानमोक्षादि शिक्षाऽभ्यासो गुणस्तत्राहितोऽतिशयो मौर्वी वा, अन्यत्र तु,–प्रयोगोऽभियुक्तव्यवहार शिक्षाऽभ्यासो गुणा स्वस्वस्थानकरणादय श्लेषप्रसादादयो वा ते भूषण येषा तेषु। यथा यथाभूता अर्था येषा तेषु यथार्थेषु। अन्यत्र,–नियतार्थेषु। शृणन्ति हिंसन्तीति शरास्तेषु जयम्। तन्निर्वाहकत्वात्तदाधारत्वविवक्षाया सप्तमी। शब्देषु पदेषु भाव प्रवृत्तिनिमित्त सामान्यादि स एव अर्थस्तमिव। आशशसे आचकाङ्क्षे। आङ्पूर्वस्य शसेराङ्पूर्वयोरिच्छायामात्मनेपदमुपसङ्ख्यानात्। यथा शाब्दिका शब्दैरर्थं साधयन्ति तद्वदय शरैर्जय साधयितुमियेषेत्यर्थ ॥ ६ ॥

उपर्युक्त विशेषणों से सम्पन्न अर्जुन अपने बाणों के आधार पर शब्दों के अपार भावार्थ की तरह विजय की अभिलाषा करने लगे। जिस प्रकार शब्द संस्कार के कारण प्रयोगार्ह होते हैं ( असाधु शब्दों के प्रयोग से प्रत्यवाय होता है ) उचित प्रयोग की शिक्षारूप गुण ही उसके भूषण हैं और यथार्थ ( शब्दानुकूल अर्थ प्रतिपादन ) में समर्थ होते हैं उसी प्रकार बाण भी चित्तवासना के अनुकूल होने के कारण चित्त को प्रसन्न रखते हैं अर्थात् उत्साह की वृद्धि में समर्थ होते हैं, उनके सधान और मोक्षादि की शिक्षा का अभ्यास ही गुण है, जो विभूषित करता रहता है। यहा शृ धातु का अर्थ है हिंसा करना—अत शर हिंसाकारी होते हैं यथा नाम तथा गुण प्रत्यक्ष रूप से उनमें सघटित हो जाता है ॥ ६ ॥

भूय समाधानविवृद्धतेजा नैव पुरा युद्धमिति व्यथावान्।
स निर्ववामाक्रममर्षनुन्न विष महानाग इवेक्षणाभ्याम् ॥ ७ ॥

भूय इति ॥ भूय पुनरपि समाधानेन युद्धाय मनोऽवस्थापनेन विवृद्धतेजा प्रवृद्धप्रताप पुरा पुरातन युद्धमेवमित्थ क्वचिदप्येवकार नाभवत्, इति हेतोर्व्यथावान् परितापवान् सोऽर्जुन ईक्षणाभ्या दृष्टिभ्या महानागो महासर्पो विषमिवाममर्षनुन्न क्रोधोत्पादितम्। अस्रमश्रु निर्ववाम निर्जगार। सात्त्विकाना रससाधारण्यात्क्रोधेऽप्युक्ति। 'स्तम्भ स्वेदोऽथ रोमाञ्च स्वरभेदोऽथ वेपथु। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मता' ॥ ७ ॥

'ऐसा युद्ध कभी नहीं हुआ था' इस प्रकार के दु ख से सतप्त अर्जुन पुन युद्ध के लिये निश्चय कर प्रबल तेज से प्रदीप्त होकर महानाग के समान, जो अपने दृष्टि से विष वमन करता है, क्रोध से अपने नेत्रों से जलविन्दु गिराने लगे ॥ ७ ॥

तस्याहवायासविलोलमौले सरम्भताम्रायतलोचनस्य।
निर्वापयिष्यन्निव रोषतप्त प्रस्नापयामास मुख निदाघ ॥ ८ ॥

तस्येति ॥ आहवायासेन युद्धायासेन विलोलमौले सस्तकेशबन्धस्य। 'चूडा किरीट केशाश्च सयता मौलयस्त्रय' इत्यमर। सरम्भताम्रे कोपारुणे आयते विस्तृते लोचने यस्य। 'सरम्भ सम्भ्रमे कोपे' इति विश्व। तस्यार्जुनस्य। रोषतप्त मुख

